# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य
मासिकं संस्कृतमुखपत्रम्

५८ तमे वर्षे ] ❀ वाराणसी ❀ फरवरी १९८१ माघः २०३७ ❀ [ अङ्कः—२

❀

[ जयतु सुरभारती ]

❀

वार्षिकं मूल्यम्

दशरूप्यकाणि
१० / ००

प्रत्येकस्याङ्कस्य

एक रूप्यकमात्रम्
१/००

आजीवनं शुल्कम्
एकशतं रूप्यकाणि
१०१/००

सम्पादकः—
डॉ० परमहंस मिश्रः

## हरिरस्तु हृदन्तरे

श्रीविन्ध्येश्वरी प्रसाद मिश्रः 'विनयः'

ललित–कलित–चारु–चन्द्र–चञ्च–
चर्चलित दृगञ्चल सञ्चितानन–श्रीः
शिरसिकलितकेकिपिच्छगुच्छोऽ
लिकुलविलसितकुन्तलोऽतिरम्यः ॥ १ ॥

अरुणतिलक भासितोरुभालो
मृगमदचन्दनविन्दुरञ्जितश्च ।
अधर–मधुसुधार्द्रदन्तपङ्क्ति–
स्फुरदनु दाडिमभ्रान्ति कान्त एषः ॥ २ ॥

सु–चिबुक शुक–नासिका–कपोला–
विति विततेनु वारिजाननेस्य ।
विलसति सखि हास्य–लास्यलीला
स्फुटित–पिशङ्गपरागचूर्णिकेव ॥ ३ ॥

ग्रथितया हरिचन्दन कुड्मलै–
स्तुलसिकालि मनोहरया तया ।
मधुप–गुञ्जितया वनमालया
परिवृढो हरिरस्तु हृदन्तरे ॥ ४ ॥

# विषय सूची



# मुकुन्दस्तवशतकम्

## रच०—त्रिपाठि यमुनेशः 'चातकः'

न काप्यास्ते निन्दा चरितविचिकित्सा मनसि मे न चाहं स्वप्नेऽपि प्रभु कथनमीहे प्रवदितुम्,
परं कृष्णे दृष्टे वृषभतनुजेशे दृगमृते जगत्यस्मिन्नन्यत् किमपि नहि मां ह्लादयति भोः! ॥८॥

त्रयस्त्रिंशत्कोटिः भुवि सुरगणानां विहरति परं कश्चिद्देवं स्पृशति हृदयं मे नहि यदि;
न मन्तव्यं चित्रं चरितमतिचित्रं यदुपतेः न कस्मिंश्चिद्दृष्टं भवविभवदं मोक्षदमपि ।९॥

न वन्देऽहं देवं निगमगदित ब्राह्मणचयैः न वन्देऽहं कश्चित्प्रकटिततनुं नाकजगतोः
अहं वन्दे शश्वत् जलदमिह कश्चित् सुमधुरं सदा वृन्दाऽऽरण्ये विलसितमिवाद्यापि सुखदम् ॥१०॥

प्रसंसा मेघानां यदि भवति लोके जलकृते तथोष्णत्वादग्निः भजति यदि सत्यं जननतिं;
तदा भुक्तेः मुक्तेः जगति सकलानां समदृशः नराणां दातैकः कथमिह न कृष्णः स्तुतिरसः ॥११॥

मदीया त्वासक्तिः सरसविषयेष्वस्ति जगतः तथा वन्द्यः सैवाखिलमुनिवरैः स्वीकृत इह;
अतो भोगे योगे समदृगनुरक्तः सुरवरः सदा सेव्यो कृष्णः मम हृदयवृत्तिः निगदति ॥१२॥

श्रुतीनामानन्त्यं यमधिगतमन्तं स्पृहयति स्मृतीनां गाम्भीर्यं निवसति च यस्मिन्नविकलम् ।
तमेवाहं मन्ये प्रणवमिति किन्त्वस्ति जगतः लयः विन्दौ यस्मिन्निगदति मुकुन्दं तममरः ॥१३॥

स्फुरन्ती मेघानां हृदि विलसिता विद्युदमला तडित्तावन्मोदं जनयति जनानां नयनयोः ।
न यावत्ते देहे चपलचपलायाः—द्युतिमपि तिरस्कर्ता पीतं लसति निचयं श्यामनवलम् ॥१४॥

वदन्त्येते सर्वे नहि स्मरति लीलां तव जनः, समर्थाः केऽप्यस्मिन्जगति मुनयः ज्ञातुमभितः ।
परं नाम्ना नाशः कृतनिखिलपापस्य भवति यदा कृष्णः स्वामी प्रकटयति लीलां हि सुतरां ॥१५॥

[ क्रमशः

रागद्वेषनिशाट

विद्वत्कोकमशो

५८ तमे वर्षे ] -२

# ❀ कस्मै देवाय हविषा विधेम ❀

मानो हिंसीज्जनिता यः पृथिव्या
यो वा दिवं सत्यधर्मा जजान।
यश्चापश्चन्द्रा बृहती र्जजान
कस्मै देवाय हविषा विधेम॥
प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परिता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणाम्॥

यः पृथिव्याः जनयिता अस्ति, सः प्रजापतिः अस्मान् उपासकान् मा हिंस्यात्। यतः माताः भूमिः पुत्रा वयं पृथिव्याः स्मः। तेन सह अस्माकम् प्रत्यक्षः सम्बन्धः वर्त्तते। नास्ति हिंसाया किमपि कारणम्। स एवास्माकम् पितामहकल्पः विश्वधारणरूप–सत्यधर्मधुरीणः अन्तरिक्षोपलक्षितान् सर्वान् लोकान् निर्ममौ। स एव आपः, चन्द्रोपलक्षिताः महतीः आह्लादकारिणीः नक्षत्रततीश्चोत्पादयामास। तस्मै कस्मै दैवाय वयं हविषा विधेम ?

देवादिदेव! त्वन्यः न कश्चित् इमां महतीमिदन्तां परिव्याप्तुं शक्नोति। यदाभिलाषोत्कर्षपरिषया वयं जुहुमः, भवदनुग्रहात् सर्वं पूर्णातिमियात्। वयम् सर्वाभिलाषसम्पूर्त्तिसंप्रीताः समस्तैश्वर्यसंवलिताः भवेम।

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५८ तमे वर्षे ] * फरवरी १९८१ * माघः २०३७ * [ अङ्कः–२


## * कस्मै देवाय हविषा विधेम *

मानो हिंसीज्जनिता यः पृथिव्या
यो वा दिवं सत्यधर्मा जजान।
यश्चापश्चन्द्रा बृहती र्जजान
कस्मै देवाय हविषा विधेम॥

प्रजापते न त्वदेतान्यन्यो
विश्वा जातानि परिता बभूव।
यत्कामास्ते जुहुमस्तन्नो अस्तु
वयं स्याम पतयो रयीणाम्॥

यः पृथिव्याः जनयिता अस्ति, सः प्रजापतिः अस्मान् उपासकान् मा हिंस्यात्। यतः माताः भूमिः पुत्रा वयं पृथिव्याः स्मः। तेन सह अस्माकम् प्रत्यक्षः सम्बन्धः वर्त्तते। नास्ति हिंसाया किमपि कारणम्। स एवास्माकम् पितामहकल्पः विश्वधारणरूप–सत्यधर्मधुरीणः अन्तरिक्षोपलक्षितान् सर्वान् लोकान् निर्ममौ। स एव आपः, चन्द्रोपलक्षिताः महतीः आह्लादकारिणीः नक्षत्रततीश्चोत्पादयामास। तस्मै कस्मै देवाय वयं हविषा विधेम ?

देवादिदेव ! त्वन्यः न कश्चित् इमां महतीमिदन्तां परिव्याप्तुं शक्नोति। यदाभिलाषोत्कर्षपरिषया वयं जुहुमः, भवदनुग्रहात् सर्वं पूर्णतामियात्। वयम् सर्वाभिलाषसम्पूर्त्तिसंप्रीताः समस्तैश्वर्यसंवलिताः भवेम।

# 卐 श्री शक्तिगीता 卐

अनन्तश्रीविभूषिताः भगवत्पूज्यपादाः ज्ञानानन्दगुरुवर्याः

महादेव्युवाच ॥ ७० ॥

अनुष्ठितेन युष्माभिर्ब्रह्मचक्रेण निर्ज्जराः ।
युष्माकं चैव सद्भक्त्या प्रसन्नास्मि न संशयः ॥ ७१ ॥
पूर्णां कर्त्तुमहं देवा भवतां यदभीप्सितम् ।
सगुणं रूपमास्थाय प्रादुर्भूतास्मि साम्प्रतम् ॥ ७२ ॥
वर्त्तते भवतां देवा यत्किञ्चित् वाञ्छितं शुभम् ।
व्याहरन्तु भवन्तस्तत् पूरयिष्याम्यहं ध्रुवम् ॥ ७३ ॥

देवा ऊचुः ॥ ७४ ॥

महादेवि ! प्रभो मातर्भक्त-मानस--मन्दिरे ।
विहारिणी, प्रसन्ने हे दया--पूरित--मानसे ॥ ७४ ॥
विबुधासुर-संग्रामे ह्यसुराणां पराजयः ।
अभून्नो विजयो देवि तत्ते ऽपारकृपाफलम् ॥ ७५ ॥
अथवा भक्तवात्सल्य---परिणामोऽस्त्ययं तव ।
इच्छामः साम्प्रतम् त्वेतद्वाङ्मनोबुद्धचगोचरम् ॥ ७७ ॥
भवत्या यत्स्वरूपं हि वर्त्तते परमाद्भुतम् ।
ज्ञानं तस्य प्रयच्छ त्वमुपदेशं तथेदृशम् ॥ ७८ ॥
तव सान्निध्य-सम्प्राप्तिर्येन विन्देम सत्वरम् ।
अमङ्गलं कदाचिन्नो न भवेच्च महेश्वरि ! ॥ ७९ ॥

महादेव्युवाच ॥ ८० ॥

अहं हि कारणं ब्रह्म कार्यब्रह्मास्मि चाप्यहम् ।
देवाः कारण-रूपेण सच्चिदानन्दमय्यहम् ॥ ८१ ॥
भूतैकाद्वैत-सत्ताणं भासमाना भवामि वै ।
सत्-सत्ता-परिविस्तृत्या ह्यहमेव पुनः सुराः ॥ ८२ ॥
अहं ममेतिवद् द्वैतभावञ्चैव बिभर्म्यहो ।
तदा ममैव चित्सत्ता पुरुषे प्रकृतौ तथा ॥ ८२ ॥
तत्सत्ता प्रकटीभूय निश्चितं विबुधर्षभाः ।
जगदानन्दसत्ताया विलासः सृजतः स्वयम् ॥ ८४ ॥

[ क्रमशः

सम्पादकीयम्—

# संस्कृत भाषायाः समस्याः

संस्कृत भाषा भारतीय संस्कृतेः सुषुम्ना । इयं भारतीयतायाः मूलाधारे स्वाधिष्ठानं विधाय मनीषायाम् पारमेश्वरैश्वर्यं परामृशति । इयं प्राणानां प्रीणनं, नाडीनां स्पन्दनम्, रुधिर-संचरणम् श्वासप्रश्वासप्रसरणं भारत-वर्षस्य । इयम् सामान्यतया मातृकामयी लिपिषु, ब्रह्ममयी परावाक् योगिनां समाधिषु, दिव्यशक्ति संवलितत्वात् देववाणी, श्रुतसर्वस्वसारभूतत्वात् श्रुतिः । किं बहुना सार्वात्म्येनेयं भरतभुवं भव्यतया भावयति, विपुलं वर्ष-वाङ्मयं संस्कृतम् ऋते न किञ्चिच्चारुतावहम् । नदीनां नामानि निनादाश्च, समुद्राणामुत्तुङ्गतरङ्गाः तेषां रत्नाकरत्वं च वसुन्धरायाः वसुधात्वं पार्थिवत्वञ्च, विद्युतामग्नेश्चन्द्रा-दित्यप्रकाशशिररश्मिनिकराणां रोचिष्णुतां, किं बहुना भारतस्य भारतत्वं च न, संस्कृतं विहायानुशीलितुं मनीषा-विषयीकर्त्तुं वा शक्यते ।

संस्कृतसंज्ञासमाह्वयाः विहगाः वियद्विहारं विदधति, जीवाः जन्तवः पशवः मनुष्याः संस्कृतस्य संस्कारपरिवेषे पारिशेष्यतः स्वात्मनः प्रत्यभिज्ञापयन्ति । वक्तुं शक्यते न संस्कृतं विना भारतस्य कल्पनापि कर्त्तुं पार्यते । अस्या-मेवागमनिगमोपनिषदां साङ्गोपाङ्गशास्त्र रहस्य—सम्पदां वस्तुतत्त्वं गुप्तप्रकटितत्वेन पारमार्थ्यमुल्लिलासयिषया च विलसति । अस्याः मातृका—महोत्सवे जननं वर्द्धनं पालनं विपरिणमनन् अपक्षयत्वम् विनशनं सर्वमेव वयम् सनातनादनुभवामः । एतत्सर्वमस्याः भाषायाः भारतीय-तायाश्चानान्तर्य्यं साधयितुं पर्याप्तम् ।

परन्तु सम्प्रति या दशा सापि साधुतया सावधानतया वा समाकलनीया । मोहम्मदीयसंमर्दनादारम्य आँग्ल-शासनपर्यन्तं पारतन्त्र्येऽपि भारतस्यात्मा देवभाषया भासमानः, स्वतो सर्वतः परिष्कर्त्तुं प्रयतमानः, दिव्यतया देदीप्यमानः आसीत् : तदा जीवनं धारयितुं संस्कृतस्य अपेक्षा आसीत् । षोडशसंस्कारपरम्पराप्रवणेषु प्राणदायिनी संजीवनीव संस्कृतावाक्स्वीकृता आसीत् । शिक्षा क्षेत्रेऽपि प्रत्यक्षतया क्षमतावैलक्षण्यं रक्षन्तीयं भाषा विश्वभाषा-जीवातुभूतेति प्रथमाना प्रेरयित्री शक्तिरिव गौरवास्पदा आसीत् ।

किन्तु अद्यत्वे इयं सर्वतः उपेक्षिता ताटस्थ्येन भारतीयात्मजान् पश्यति । अकारणकरुणामयीयं वाणी समाह्वयति भारतीयान् स्वात्मनिरीक्षणं कर्त्तुं । सा मन्ये अतएव तूष्णीं श्रितेव श्वसिति !

पश्यन्तु भवन्तः विचारयन्तु च पौनःपुन्येन—यत् कीदृशीयं समापतिता परिस्थितिः विषमातिविषमतमा । सम्प्रति भारतवर्षे घनक्रमजटादि—वेदविद्याविधाविज्ञाः मात्रं विंशति-पंचविंशतिसंख्याका एव सन्ति अवशिष्टाः । ये सन्ति तेऽपि पञ्चाशद्वर्षतःसप्ततिपर्यन्तं वयसः पारंगताः सन्ति ।

एवमेव—व्याकरण—ज्योतिष—वेदान्त—दर्शनादिशास्त्र—निष्णाताः परिष्कारपारंगताः गुरुपरम्पराप्राप्तरहस्यप्रकाशन-सक्षमाः कतिपये सन्ति गुरुवर्याः ।

शासनं प्रजातन्त्रम् । निर्वाचन पद्धतिः स्वीकृता । अत्र विचारस्य वस्तुतत्त्वस्य न महत्वम् । संख्यासुरशक्तिसामर्थ्य-वन्तः मतपेटिकां लक्षीकुर्वन्ति, न भारतस्यात्मानं परि-चिन्वन्ति ।

सम्प्रति त्रिभाषानियमात् प्रायः शिक्षाक्षेत्रात् संस्कृता बहिष्कृतेव वर्त्तते । संस्कृतपठनेन जीविकापि सबाधा

भवति—इति कृत्वा उपेक्षन्ते दक्षतया भारतीयतायाः छद्म-शत्रवः। उर्दू अत्र द्वितीया राजभाषा भवितुं शक्नुयात् यैः उर्दूपक्षपातः मतप्राप्त्यै क्रियते संख्याऽसुरबलेन शासनधुरां धारकाः।

आकाशवाणीविभागे यदा उर्दूसमाचारस्य समुद्घोषकाः नियोजिताः सन्ति, तत्र संस्कृतभाषायाः कोपि कार्यालयाध्यक्षः स्वतन्त्रः नहि नियुक्तो वर्त्तते। पञ्चपलमात्रं संस्कृताय यत्र दीयते तत्रैव उर्दूभाषार्थं विंशमिनटसमयव्यवस्था प्रतिदिनं पृथक् कृता वर्त्तते। मन्ये शासकाः मन्यन्ते यत् संस्कृतज्ञानां नास्ति कापि संघटना, नैतेषां कोपि शंखनिनादः! नास्ति कोऽपि घोषः, अतएव संस्कृतस्य शासनद्वारा इयम् असहनीया उपेक्षा क्रियते—वाराणसी गोरखपुर—इलाहाबाद—लखनऊ आदिषु केषुचिदपि आकाशवाणीकेन्द्रेषु न कोपि स्वतंत्रः संस्कृतकार्यक्रमसंचालकाधिकारी। पृच्छति सूर्योदयमाध्यमेन संस्कृतसमाजः—कथमेतदिति ?

विवाहादिषु हिन्दूसंस्कारेषु प्राक् प्रामाण्यमासीत्। सम्प्रति न्यायालयेषु विवाहव्यवस्था विहिता। एतत् निश्चप्रचम् धर्मपरम्पराविरुद्धम् वेदविधिना सम्पन्ने कर्मकाण्डे संस्कारसमावेशः भवति। न्यायालये को नाम संस्कारः समापतिष्यति मस्तिकेषु इति एषा प्रक्रियापि संस्कृतविपरीता।

संस्कृत विश्वविद्यालयेषु च राजनीतेः प्रवेशः, राजनीतिज्ञानां च हस्तक्षेपः प्रारब्धः वर्त्तते। राजनेतारः छात्रसमुदायमुखेन विदुषोऽपि स्वकार्यदक्षानपि गालीं प्रदापयन्ति, अव्यवस्थां कारयन्ति—गुरुजनानामवमाननां च आचारयन्ति। एतेनाऽपि संस्कृतस्वाध्यायं दूषयन्ति।

सर्वे धर्मधुरन्धराः मठाधीशाः सन्यासिनाः संस्कृतसमर्थकाः एतां दशां मौनमवलम्ब्य पश्यन्ति किन्तु एकत्र मिलित्वा, एकं निर्णयं कृत्वा, एकस्मिन् उद्देश्ये संग्रथिताः सन्तः कर्मण्यतां नाङ्गीकुर्वन्ति।

संस्कृतप्राध्यापकाः ये विश्वविद्यालयेषु संस्कृतसेवया एव जीविकां प्राप्य जीवन्ति तेपि विविधव्यापारव्यापृताः वस्तुस्थितिं प्रति नेत्रे निमील्य स्थिताः नेतरान् प्रभावयन्ति न च किमपि कर्त्तुं कञ्चिदपि प्रेरयन्ति।

संस्कृत अकादमी संस्थापिता शासनेन, तन्माध्यमेन एतासां दुरवस्थानां निराकरणं कर्त्तुं पार्येत चेत् शोभनं स्यात् किन्तु तत्रापि दलदलितत्वमुज्जृम्भते।

ये किमपि कर्त्तुं वाञ्छन्ति ते साधनहीनाः सन्ति। ये साधनसम्पन्नाः सन्ति ते ताटस्थ्येन स्थिताः व्यष्टिप्रतिष्ठायामेवेष्टतां स्वीकुर्वाणाः सन्ति निश्चेष्टाः।

सूर्योदयः एतां विषमतां संस्कृतसेविनां पुरतः समुपस्थापयति। स्वकीयैः विचारैः सम्मतैः श्रीमन्तः पाठकाः सम्पादकं कृतार्थयन्तु—पत्रेषु स्वमनीषितं श्रीमन्तः प्रेषयन्तु—तदनुसृत्य चेत् संस्कृतोत्कर्षदिक् अनुस्रियेत तर्हि संस्कृतसेविनां मनस्तोषायैव स्यात्। सारस्वतप्रसादसिद्ध्यर्थं चैतदनिवार्यमिति।

# तन्त्रालोकः

श्रीमन्महामहेश्वराचार्याभिनवगुप्तपादविरचितः गताङ्कात् अग्रिमोंशः

[ जयरथकृतविवेकाभिख्यव्याख्योपेतः ]

इदानीमपरमपि त्रिकं परामष्टुमाह—

स्वातन्त्र्यशक्तिः क्रमसंसिसृक्षा
क्रमात्मता चेति विभोर्विभूतिः ।
तदेव देवीत्रयमन्तरास्ता—
मनुत्तरं मे प्रथयत्स्वरूपम् ॥ ५ ॥

स्वातन्त्र्यरूपा शक्तिः-यस्यासौ अनन्तशक्ति र्भगवान् शिवः, क्रमस्य—

'मूर्तिवैचित्र्यतो देशक्रममाभासयत्यसौ ।
क्रियावैचित्र्यनिर्भासात् कालक्रममपीश्वरः ॥'
( ई० २।१।५ )

इत्याद्युक्तनीत्या देशकालात्मनो विश्ववैचित्र्यस्य सर्गस्य, सम्यग्भेदेन 'सिसृक्षा' जगत्सृष्टिनिमित्तं पारमेश्वरी इच्छारूपा शक्तिः, 'क्रमात्मता'

'क्रमो भेदाश्रयो भेदोऽप्याभाससदसत्त्वतः ।'
( ई० २।१।४ )

इत्यादिनीत्या भेदप्रधानं तत्तदनन्ताभाससंभिन्नं संकुचितात्मरूपं नरत्वम्, इत्येवं येयं नर-शक्ति-शिवात्मिका 'विभोः' भगवतः परस्यानुत्तरस्य प्रकाशस्य 'विभूतिः' तत्तत्स्फुरणात्मत्वेन ऐश्वर्यं 'तदेव' क्रमेण तत्स्फारसारत्वात् समनन्तरोक्तस्वरूपं 'देवीत्रयं' परप्रकाशात्मकत्वात् 'अनुत्तरं' 'स्व' सर्वकर्तृत्वादेरसाधारणं 'रूपं' 'प्रथयत्' तत्तद्भेददशोदयेऽप्यतिरोदधत् मम आत्मनः 'अन्तरास्ताम्' ऐकात्म्येन स्फुरतात्-इत्यर्थः ॥५॥

एवं स्वदर्शनोचितदेवतापरामर्शानन्तरं तत्स्वरूपानुप्रवेशेनैव युगपद् गणेशबटुकावपि अभिमुखयति ।

तद्देवताविभवभाविमहामरीचि-
चक्रेश्वरायितनिजस्थितिरेक एव ।
देवीसुतो गणपतिः स्फुरदिन्दुकान्तिः
सम्यक्समुच्छलयतान्मम संविदब्धिम् ॥६॥

'एक एव' अनन्यापेक्षतया निःसहायो 'गणस्य' करणचक्रस्य

'दिनकरसममहदादिकगणपतितां वहति यो नमस्तस्मै ।'

इत्यादिदृशा 'पतिः' अहङ्काररूपः प्रभुः, अत एव 'तासां' समनन्तरोक्तानां 'देवतानां' 'विभवेन' परप्रकाशात्मना स्फारेण

'यत्तत्र नहि विश्रान्तं तन्नभःकुसुमायते ।'

इति वक्ष्यमाणनीत्या भवनशीलाः तन्मयतया परिस्फुरन्त्यो या 'महामरीचयः' तत्तदिन्द्रियदेवताः तासां यत् 'चक्रं' तत्रेश्वरवदाचरन् निजस्थितिर्यो 'मम' आत्मनः 'संविद्' एव अनवगाह्यत्वात् 'अब्धिः' 'सम्यक्' विषयकालुष्यविलायनेन समन्तात् सर्वत एव तत्तदिन्द्रियप्रसृतसंविद्द्वारेण 'ऊच्छलयतात्' विकासयतात्, तदेकमयतामुत्पादयतात् इत्यर्थः । अब्धिसमुच्छलनसमुचितत्वाच्च 'स्फुरदिन्दुकान्तिः' इत्युक्तम् । वस्तुतो हि अपानव्याप्तिरस्यास्ति इत्येवं-निर्देशः ।

अथ च 'देवीसुतो' बटुकोऽप्येवंविधः, किंतु शरीरस्य धवलिम्ना 'स्फुरदिन्दुकान्ति' । अस्य हि प्राणव्याप्तिरस्ति इत्येवं निर्दिशन्ति गुरवः । 'देवीसुत' इत्युभयोरपि कुलशास्त्रोचितोऽयं व्यपदेशः तदुक्तम्

'देवीपुत्रोऽत्र वेटुकः स्वशक्तिपरिवारितः ।'

इति ।

'गणेशो विघ्नहर्तासौ देवीपुत्र······।'

इति च ॥६॥

इह खलु शास्त्रादौ

'·········स्रोतोभेदं संख्यानमेव च ।

प्रवर्तयेद् गुरुं स्वं च स्तेयी स्यात्तदकीर्तनात् ॥'

इत्याद्युक्तदृशा अवश्यमेव शास्त्रकारैः स्वगुर्वादेः कीर्तनं कार्यम्, अतश्च वक्ष्यमाणशास्त्रस्य कुलतन्त्रप्रक्रियात्मकत्वेन द्वैविध्येऽपि

'नभःस्थिता यथा तारा न भ्राजन्ते रवौ स्थिते ।

एवं सिद्धान्ततन्त्राणि न विभान्ति कुलागमे ॥

तस्मात्कुलादृते नान्यत्संसारोद्धरणं प्रति ।'

इत्याद्युक्त्या कुलप्रक्रियायाः प्रक्रियान्तरेभ्यः प्राधान्यात्

'भैरव्या भैरवात्प्राप्तं योगं व्याप्य ततः प्रिये ।

तत्सकाशात्तु सिद्धेन मीनाख्येन वरानने ॥

वामरूपे महापीठे मच्छन्देन महात्मना ।'

इत्यादिनिरूपितस्थित्या तदवतारकं तुर्यनाथमेव तावत् प्रथमं कीर्तयति ।

रागारुणं ग्रन्थिबिलावकीर्णं

यो जालमातानवितानवृत्ति ।

कलोम्भितं बाह्यपथे चकार

स्तान्मे स मच्छन्दविभुः प्रसन्नः ॥७॥

'स' सकलकुलशास्त्रावतारकतया प्रसिद्धः

'मच्छाः पाशाः समाख्याताश्चपलाश्चित्तवृत्तयः ।

छेदितास्तु यदा तेन मच्छन्दस्तेन कीर्तितः ॥'

इत्याद्युक्त्या पाशखण्डनस्वभावो मच्छन्द एव परमेश्वरसमावेशशालित्वात् 'विभुः' मम प्रसन्नः 'स्तात्' स्वात्मदर्शनसंविभागपात्रतामाविष्कुर्यात् इत्यर्थः । यो 'जालं' मत्स्यबन्धनम्, इन्द्रजालप्रायां च मायां 'बाह्यपथे चकार'

'अष्टौ सिद्धा महात्मानो जालपृष्ठाः सुतेजसः ।'

इत्याद्युक्त्या तुरीयतास्वरूपावहितत्वेन संकोचापहस्तनादनवधेयतां च निन्ये इत्यर्थः । तच्च 'रागेण' गैरिकादिद्रव्येण रागतत्त्वेन च 'अरुणं' लोहितीकृतम् इयर्ति गच्छति इत्यर्थानुगमात् तत्तद्भेददशाप्रसररूपं च, तथा 'ग्रन्थिभिः' बन्धनैः 'बिलैः' च सलिलनिर्गमनस्थानैः 'ग्रन्थौ' मायाया द्वितीयस्मिन् भेदे 'बिलैः' बिलाकाराभिः भगसंज्ञाभिर्भोगभूमिभिश्च 'अवकीर्णं' व्याप्तम् तथा 'आतानवितानवृत्ति' आयामपार्श्वमानयुक्तं विश्वाकारत्वात् सर्वतः प्रसरद्रूपं च, तथा 'कलया' विच्छित्तिविशेषेण कलातत्त्वेन च अर्थात्क्षितिपर्यन्तेन 'उम्भितम्' आरब्धम् । यदुक्तम्

'मायारूपं भवेज्जालं दारयेत्कुलचिन्तकः ।

विश्वाकारं महाजालं नाडीसूत्रनियोजितम् ॥

भुवनाक्षसमोपेतं तत्त्वग्रन्थिदृढीकृतम् ।

कलारागयुतं चैव······ ·········॥'

इत्यादि ॥७॥

'श्रीमच्छ्रीकण्ठनाथाज्ञावशात्सिद्धा अवातरन् ।

त्र्यम्बकामर्दकाभिख्यश्रीनाथा अद्वये द्वये ॥

द्वयाद्वये च निपुणाः क्रमेण शिवशासने ।

आद्यस्य चान्वयो जज्ञे द्वितीयो दुहितृक्रमात् ॥

स चार्धत्र्यम्बकाभिख्यः सन्तानः सुप्रतिष्ठितः ।

अतश्चार्धचतस्रोऽत्र मठिकाः सन्ततिक्रमात् ॥'

इति वक्ष्यमाणस्थित्या श्रीसन्तत्यामर्दकत्रैयम्बकार्धत्रैयम्बकाख्यासु सार्धासु तिसृषु मठिकासु मध्यात् वक्ष्यमाणतन्त्रप्रक्रियायः त्रैयम्बकमठिकाश्रमणेन आयातिक्रमोऽस्ति इति सामान्येन तावत् गुरूनभिमुखयति—

त्रैयम्बकाभिहितसन्ततिताम्रपर्णी

सन्मौक्तिकप्रकरकान्तिविशेषभाजः ।

पूर्वे जयन्ति गुरवो गुरुशास्त्रसिन्धु–
कल्लोलकेलिकलनामलकर्णधाराः ॥८॥

'त्रैयम्बक' इति 'अभिहिता' 'सन्ततिः' मठिका इत्यर्थः ॥८॥

एवं

'शैवादीनि रहस्यानि पूर्वमासन्महात्मनाम् ।
ऋषीणां वक्त्रकुहरे तेष्वेवानुग्रहक्रिया ॥
कलौ प्रवृत्ते यातेषु तेषु दुर्गमगोचरम् ।
कलापिग्रामप्रमुखमुच्छिन्ने शिवशासने ॥
कैलासाद्रौ भ्रमन्देवो मूर्त्या श्रीकण्ठरूपया ।
अनुग्रहायावतीर्णश्चोदयामास भूतले ॥
मुनिं दूर्वाससं नाम भगवानूर्ध्वरेतसम् ।
नोच्छिद्यते यथा शास्त्रं रहस्यं कुरु तादृशम् ॥
ततः स भगवान्देवादादेशं प्राप्य यत्नतः ।
ससर्ज मानसं पुत्रं त्र्यम्बकादित्यनामकम् ॥'

इत्याद्युक्तमा कलिकालुष्याद्विच्छिन्नस्य निखिलशास्त्रोपनिषद्भूतस्य षडर्धक्रमविज्ञानस्य त्रैयम्बकसन्तानद्वारेण अवतारकत्वादाद्यं कैलासस्थं श्री श्रीकण्ठनाथाख्यं गुरुं प्रसङ्गात् मठिकान्तरगुरूंश्चोत्कर्षयति–

जयति गुरुरेक एव
श्रीश्रीकण्ठो भुवि प्रथितः ।
तदपरमूर्तिर्भगवान्
महेश्वरो भूतिराजश्च ॥९॥

'एक एव गुरुः' इत्यनेन अस्य अवतारकत्वं सूचितम् । 'महेश्वर' इति यः श्रीसन्तत्यर्धत्रैयम्बकाख्यमठिकयोर्गुरुतया तनेन अन्यत्रोक्तः परमेश इति इश इति च । यदाह

'भट्टारिकादिभूत्यन्तः श्रीमान्सिद्धोदयक्रमः ।
भट्टादिपरमेशान्तः श्रीसन्तानोदयक्रमः ॥
श्रीमान्भट्टादिरीशान्तः परगोऽथ गुरुक्रमः ।
त्रिकरूपस्त्रिकार्थे मे धियं वर्धयतांतराम् ॥'

इति । 'तदपरमूर्तिः' इत्यनयोर्भगवदावेशमयत्वं दर्शितम् । यद्यपि

'यो यत्र शास्त्रेऽधिकृतः स तत्र गुरुः ''''''।'

इति वक्ष्यमाणनीत्या मठिकान्तरगुरूणां त्रिकार्थे गुरुत्वाभावात् इह नमस्काराप्रस्ताव एव । तथापि

'तस्य मे सर्वशिष्यस्य नोपदेशदरिद्रता ।'

इत्यादिदृशा सर्वत्रैव गुरुपदेशस्य भावात् आत्मनि भूयोविद्यत्वं दर्शयता ग्रन्थकृता अस्य ग्रन्थस्यापि निखिलशास्त्रान्तरसारसग्रहाभिप्रायत्व प्रकाशितम् । यद्वक्ष्यति

'अध्युष्टसन्ततिस्रोतः सारभूतरसाहृतिम् ।
विधाय तन्त्रालोकोऽयं स्यन्दते सकलान्रसान् ॥'

इति ॥९॥

'पूर्वे जयन्ति गुरवः' इति सामान्येन कृतेऽपि नमस्कारे योगाङ्गत्वेन समानेऽपि

'''''''''''''''''''''तर्को योगाङ्गमुत्तमम् ।'

इत्याद्युक्त्या परमोपादेयस्वप्रकाशस्वात्मेश्वरप्रत्यभिज्ञापनपरस्य तर्कस्य कर्तारो व्याख्यातारश्च परं नमस्कर्तव्याः इति विशेषप्रयोजकीकारेण गुरु-परमगुरु-परमेष्ठिनः पुनरपि परामष्टुमाह––

श्री सोमानन्दबोधश्रीमदुत्पलविनिःसृताः ।
जयन्ति संविदामोदसन्दर्भा दिक्प्रसर्पिणः ॥१०॥
तदास्वादभरावेशबृंहितः मतिषट्पदीम् ।
गुरोर्लक्ष्मणगुप्तस्य नादसंमोहिनीं नुमः ॥११॥

इदानीम्

उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता ।'

इत्याद्युक्त्या तस्याचार्यादपि गौरवातिरेकस्मृतेर्निजमपि पितरमाशीर्वादमुखेन परामृशति––

यः पूर्णानन्दविश्रान्तसर्वशास्त्रार्थपारगः ।
स श्रीचुखुलको दिश्यादिष्टं मे गुरुरुत्तमः ॥१२॥

'चुखुलक' इति लोकप्रसिद्धमस्य नामान्तरम्। 'गुरुत्तम' इति उत्तमत्वस्य आचार्यगौरवातिरेकस्मृतिरेव निमित्तम्, अत एव अन्यत्रापि—

'गुरुभ्योऽपि गरीयांसं जनकं चुखुलाभिधम्।'

इत्याद्युक्तम् ॥ १२ ॥

एवं च तन्त्रप्रक्रियोपासन्नगुर्वभिमुखीकरणानन्तरं विश्रान्तिस्थानतया कुलप्रक्रियागुरुमपि उत्कर्षयति—

जयताज्जगदुद्धृतिक्षमोऽसौ
भगवत्या सह शंभुनाथ एकः।
यदुदीरितशासनांशुभिर्मे
प्रकटोऽयं गहनोऽपि शास्त्रमार्गः ॥१३॥

भगवत्याख्या अस्य दूती, कुलप्रक्रियायां हि दूतीमन्तरेण क्वचिदपि कर्मणि नाधिकारः इत्यतस्तत्सहभावोपनिबन्धः—

'योक्ता संवत्सरात्सिद्धिरिह पुंसां भयात्मनाम्।
सा सिद्धिस्तत्वनिष्ठानां स्त्रीणां द्वादशभिर्दिनैः॥
अतः सुरूपां सुभगां सरूपां भाविताशयाम्।
आदाय योषितं कुर्यादर्चनं यजनं हुतम्॥'

इति। 'शास्त्रमार्गो, विमलो जातः इत्यनेनास्य त्रिकाद्यागमव्याख्यातृत्वमपि प्रकाशितम्। यदुक्तमनेनैव—

'इत्यागमं सकलशास्त्रमहानिधाना-
च्छ्रीशंभुनाथवदनादधिगम्य सम्यक्।
शास्त्रे रहस्यरससंततिसुन्दरेऽस्मिम्
गम्भीरवाचि रचिता विवृतिमंयेयम्॥'

इति। १३ ॥

इदानीं स्वप्रवृत्तिप्रयोजनादि आचक्षाणो ग्रन्थकारो ग्रन्थकरणं प्रतिजानीते—

सन्ति पद्धतयश्चित्राः स्त्रोतोभेदेषु भूयसा।
अनुत्तरषडर्धार्थक्रमे त्वेकापि नेक्ष्यते॥१४॥

न चात्र अन्यथा संभाव्यम्—इत्यात्मन्याप्तत्वं प्रख्यापयन्नेवं प्रतिज्ञाकरणे सामर्थ्यं दर्शयति

इत्यहं बहुशः सद्भिः शिष्यसब्रह्मचारिभिः।
अर्थितो रचये स्पष्टां पूर्णार्थां प्रक्रियामिमाम् ॥१५॥

श्रीभट्टनाथचरणाब्जयुगात्तथा श्री-
भट्टारिकांघ्रियुगलाद्गुरुसन्ततिर्या।
बोधान्यपाशविषनुत्तदुपासनोत्थ-
बोधोज्ज्वलोऽभिनवगुप्त इदं करोति ॥१६॥

तस्य गुरुपरम्परागतस्य ज्ञानस्य 'उपासनं' पुनः पुनः चेतसि विनिवेशनं तत उत्थितो योऽसावुपदेष्टव्यविषयो 'बोधः' साक्षात्कारस्तेन 'उज्ज्वलः' सम्यगवगतधर्मा सन् 'इदं' गुरूपदेशात्संशयविपर्यासादिरहितत्वेनाधिगतमनुत्तरत्रिकार्थप्रक्रियालक्षणं परान्प्रति चिख्यापयिषया 'करोति' उपदिशति इत्यर्थः 'अभिनवगुप्त' इति सकललोकप्रसिद्धनामोदीरणेनापि आप्तत्वमेव उपोद्वलितम्। उक्तं हि

'साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा चाप्तः।'

इति। तच्छब्दपरामृष्टं व्याचष्टे 'या गुरुसन्ततिः' इति, 'गुरुसन्ततिः' 'गुरुपारम्पर्यमविच्छिन्नतया स्थितं तदुपदिष्टं ज्ञानमित्यर्थः, सा च कीदृक्? इत्युक्तं—'बोधान्यपाशविषनुत' इति

'यत्किंचत्परमाद्वैतसंवित्स्वातन्त्र्यसुन्दरात्।
पराच्छिवादुक्तरूपादन्यत्तत्पाश उच्यते॥'

इत्यादिवक्ष्यमाणनीत्या 'बोधात्' पराच्छिवाद्यदख्यात्यात्मभेदप्रथात्मकम् 'अन्यत्' तदेव 'पाशः' स एव मोहकत्वात् 'विषं' तत् नुदति या सा। तथा 'श्रीभट्टनाथ' इति श्रीशंभुनाथः। 'श्रीभट्टारिका' इति भगवत्याख्या अस्यदूती।

[ क्रमशः

# * श्री शक्तिशतकम् *

[ पूर्वतोऽनुवृत्तम् ]

## रचयिता— शिवजी उपाध्यायः

सं० संस्कृतविश्वविद्यालयः वाराणसी, उ० प्र०

(गर्भ स्तुतिः)

## ( प्रश्नोत्तरगर्भा ) पृच्छा स्तुतिः

मातस्त्वन्ननु का? सुत! त्रिजगतीरूपैव साऽहं शुभा,
सा भूमीति जडात्मिका? नहि नहि, प्राणित्यसौ जीवनात्।
किं तज्जीवनमस्ति? जीवजनिता शक्तिः परा पावनी,
का शक्तिः? त्रिजगत्समूहितपदप्रोद्यद्धिमाद्रिस्थिता ।।४०।।

कोऽयं देवि! हिमाद्रिरेष? ननु सा शक्तिः कथं तद्गता?
सोऽयं मे सुत! भूमिभृद् भरतभूभूषायमाणो महान्।
तत्र त्वन्नु कुतो गता? शृणु, सुता साऽहं महाभूभृतः,
किं ते नाम नगेशजे! स्मितमुखीं मां पार्वतीं स्वीकुरु ।।४१।।

आश्चर्यं भगवत्यहो! क्वचन नो पाषाणकन्या श्रुता,
नाश्चर्यं कुरु पुत्र! सोऽस्ति जगतां देवालयो दैवतम्।
विश्वासो ननु केवलोऽयमिति हे देवि!, भ्रमे भ्राम्यसि,
पश्यैनं वियदुन्नतं हिमसरिच्छायोल्लसन्मानसम् ।।४२।।

नाहं तत्र गतोऽस्मि मातरधुना नो वा तमेनं तथा,–
मन्ये त्वं भणसीति केवलमहं कर्णे करोमीत्यलम्।
पुत्र! त्वन्ननु कुत्र सम्प्रति वसस्यत्रैव काश्यां क्वचित्,
एवं तच्छृणु सा ममापि नगरी तत्रान्नपूर्णाऽस्म्यहम् ।।४३।।

बुद्धौ तेऽस्तु यथा तथाऽखिलमिदं त्वां बोधये संशृणु,
गङ्गाऽऽयाति हिमालयात्तदमृत–स्वच्छाम्बु पीतं त्वया।
सेयं देवनदी स्वतोऽपि महिता देवीति संगीयते,
तस्याः सोऽस्ति हिमालयोऽत्र जनको जानीहि तं दैवतम् ।।४४।।

किञ्चित् किञ्चिदिव प्रतीतिपदवीमायाति मातस्त्वया,
युक्त्या युक्तमवादि किन्तु किमपि श्रुत्वा पुनर्धीयताम्।
यत्रेदं जनकत्वमस्तु तदिदं जीवद्वपुर्दैवतम्?,
नेत्थं व्याप्तिरियं पदार्थ-निचये नो चेत्सुराः स्युर्नगाः ।।४५।।

हं हो! पुत्र कुतो नु संपठितवान्? साधूक्तवान् युक्तिमत्,
तर्के मे प्रतिभासि पण्डित इति स्वस्त्यस्तु ते श्रूयताम्।
जन्यत्वे जनकत्वमस्ति तदिदं तच्छक्तिमत् स्याद् ध्रुवं,
तत्वं कालगतं विभुः स भुवने, तस्याश्रयः सम्मतः ।।४६।।

मातः! स्याददिति किन्तु तेन? भवती दूरं प्रसङ्गाद् गता,
देवत्वं हिमवत्यपास्तमिति तत्पक्षं निजं रक्षतु।
मैवं ब्रूहि सुत! त्वमत्र विषये विद्वान् यथा भासि मे,
कालोऽयं[1] हिमवत्प्रयोज्यविषयीभूतोऽस्ति मे 'बालक' ।।४७।।

---

१—हिमवन्निष्ठप्रयोजकतानिरूपितप्रयोज्यतावान् काल इति मातुरुत्तरपक्षस्याशयः।

मातस्त्वं गृहिणीव संभणसि किं ? बालोऽस्मि ते चेदहं,
तत्र प्रत्ययमादधासि नियतं स्वल्पार्थकं त्वं किमु ?।
वादं नेच्छसि नेच्छ यच्छसि न चेत्साधूत्तरं याम्यहं,
'हंहो ! मे प्रिय पुत्रक ! प्रियतया स्नेहार्थकः प्रत्ययः' ॥४८॥

नाहं भ्रामयितुं वदामि किमपि श्रुत्वा मनस्तोषय,
त्वं मे साधुमतिर्विभासि मनसा संचिन्त्य सन्तुष्यसि।
योऽस्त्येषोऽत्र हिमालयः, स हि दिवारात्रद्वयस्योद्भवे,
हेतुश्चैकतया मतो रविमयं सञ्चालयत्यञ्जसा ॥४९॥

साहाय्यं[1] कुरुतश्च तौ तदनुजौ प्राच्यां प्रतीच्यामपि,
भानोस्तावुदयास्त भूधर–वराबाधारहेतू कृतौ।
एते पादपराजिराजितधराधारा हिमाद्रिं श्रिताः,
कालो भानुसमाश्रितो भुवि ततोऽस्माकं पिता दैवतम् ॥५०॥

हंहो पुत्रक ! तत्र मे जनिगृहं साऽहं स्थिरा, ते गुरुः,–
कश्चित् सोऽपि हिमालये निवसति प्रीत्या मयाऽऽराधितः।
भूयो भूतगणाश्च पञ्चकलिता भूता इवात्रैव ते,
देवास्तत्र गणाधिराजपितरं मां चार्थयन्तेऽनिशम् ॥५१॥

कालो यत्कलयेत्तदेव भुवने तस्याश्रयं संश्रयेत्,
जन्यत्वं[2] जनकत्वमित्युभयमप्यत्रैव संसज्यतः।
योगासिद्धतया विकल्पितगतिः[3] कालः स्वयं यत्र सः,
योगाय प्रभवेदसौ ननु कथं ? पुत्रात्मना धीयताम् ॥५२॥

कालः खण्डितखण्डितात्मवपुषा यत्र स्थितिं न व्रजेत्,
कालोनाथ इहास्ति तत्प्रशमितः कालो न संव्याप्नुते।
कुत्राप्याश्रयता न तस्य विमले स्वान्तेऽत्र तत्त्वाश्रिते,
भ्रान्तो मा भव पुत्र तर्ककलितां बुद्धिं विदूरात् त्यज ॥५३॥

श्रुत्वैतनव नूनमेव भवताच्चित्ते समाधिः स्रवतः,
पुत्र ! प्रेमणि सम्मतोऽसि मनसा शक्तिस्तवाङ्गीकृता।
साऽहं यत्कथयामि तत् समुचितं जातो विलम्बो महान्,
त्वञ्चापि स्वयमप्यहं सुमनसौ तद् गम्यतां स्वं गृहम् ॥५४॥

मय्यासक्तमनाः सुनिर्मलमतिर्न क्वाप्यसौ भ्राम्यति,
त्वं सम्यक् प्रतिभासि केवलभवज्जाले कपालीकृतः।
शस्त्राशस्त्रियुधि स्मृतं श्रुतमिदं नास्ति क्वचित् पुत्रक !,
वादोऽयं कलहाय मे सुत शृणु, स्वान्तं समुन्मीलय ॥५५॥

मातस्ते चरणारविन्दमधुरप्रस्यन्दमानामृत-
स्वादोल्लासमनोज्ञमानसवपुर्भृङ्गायते त्वत्सुतः।
शस्त्राशस्त्रिकृतं श्रुतं न च, न चेत्थं स्यात्परं ते वचः,
गीताशास्त्रतिरस्कृतिं भगवति ! त्वं मा कृथाः 'सा श्रुतिः'।५६॥

भूयस्त्वं भ्रमसीव किं ननु च तज्जन्यं न सम्मन्यतां,
श्रौताचारनिगूढधर्मसुरभीभूतामृतं शाश्वतम्।
कर्म ज्ञानज योग–मोक्ष–भगवत्साक्षात्कृतेर्दर्शनं,
गीताशास्त्रमशेषकष्टभरितान्तर्भारत– त्राणदम् ॥५७॥

---

१ — भौगोलिकदृष्ट्या सर्वमुत्तरमव-दातमिति, शास्त्रीयोऽपि पक्षस्ततो न विरुणद्धीति मातुः समीचीनः सिद्धान्तपक्षः।

२—योगेन धारणादिना समाधिनाऽपि योगीश्वराणां कृते आश्रयत्वेन सम्बन्धसाधकत्वेन वा निरवधि तन्निर्वाहकत्वेन वा आसमन्ताद् भूतभविष्यद्वर्तमानरूपात् सिद्धोऽसौ कालः, व्यापकत्वादिति तथापि साध्यतावच्छेदककोट्यनालिङ्गितत्वाद् वा सर्वात्मना कालस्य साध्यतावच्छेदकानवच्छिन्नत्वाद् वा तथैव योगा सिद्धितया तत्र न संगच्छते।

३—विकल्पितगतिः, विशिष्टाः कल्पा एव ब्रह्माद्यायुष्ट्वप्रत्यायकत्वेन खण्डशः कल्पिताः स्मृतास्तद्द्वारा गतिर्गमनं लोकाश्रयत्वनिर्वहणं कालस्येति योगतः कल्पितसम्बन्धतोऽसिद्धः पुनरासमन्तात् सिद्धोऽपीति द्वयमविरुद्धमस्य विभोः कालस्येतिमे प्रतिभाति।

विश्वत्राणमपेक्षते तव सुत ! त्वं पूर्वमेवोक्तवान् ,
यत् त्राणाय च कल्पते ननु न तच्छस्त्रायितं सांस्मृतम् ।
गीताशास्त्रनिदर्शनं स भगवान् सूतायमानो हरिः ,
शस्त्रं न क्वचिदाददौ त्रिजगतां त्राणप्रदोऽयं स्वयम् ।।५८।।

धन्यो धन्यतमोऽस्मि, धन्यमखिल ज्ञानं च ते भास्वरं
भास्वद्भूरिविभा–प्रकाशनपरं मातः ! पराधीश्वरि !! ।
शक्ति ! श्रीपरमे ! रमे ! सुरगणत्राणैकभूमिः स्वयं,
ब्रह्मप्राणनचिन्मयि ! प्रतिभया हीनं सुतं रक्ष माम् ।।५६।।

श्रीमन्मातरधीश्वरि ! क्व नु गता ? चक्षुः समुन्मील्य मे ,
शक्तिस्त्वं परमा मता जगदिदं त्रातुं श्रुतौ संस्तुता ।
पूर्वस्यां दिशि भानुमानुदयते लोकोऽखिलो भासते ,
हृद्देशे तमसावृते प्रतिभया को भासतां त्वामृते ।।६०।।

इति श्रीशक्तिशतके गर्भस्तुतिरूपा–
'पृच्छास्तुतिः' पर्यवसिता ।

१–अथ परमाणुक्षेप्यस्त्रादि–निर्माणं–महासुरावतार-कल्पमुत्प्रेक्ष्य तत्प्रशमनार्थं तद्द्वारा जगद्रक्षणस्यावश्य-कत्वनिरूपणम्:—

कष्टं कष्टमतीवकष्टमखिलानन्दप्रदे ! श्रीमति !,
प्रादुर्भूतमनन्तमत्र जगति प्रोद्दण्डशस्त्रासुरैः ।
सर्वस्मात् प्रमुखो विशेषघटितप्राणाधिको विश्वराट् ,
तीक्ष्णान्तः परमाणुकासुरवरो लब्धावतारो नवः ।।६१।।

विश्वं सर्वमसौ जिघांसति मुखं व्यादाय विद्योतते ;
नैके तस्य वशानुगा अनुचरा क्षेप्यासुराः क्षिप्रगाः ।
व्यादातुं विहरन्ति ते दिवि दिवारात्रं भृशं त्रासदाः ,
यानानि प्रमुखानि सन्ति नभसि प्रोद्यन्ति विद्युन्निभम् ।६२।।

शक्ति ! श्रीमति ! येऽसुराः समभवन् शुम्भादयो वा पुरा ,
तेष्वेकोऽपि न शक्ष्यति प्रतिभटंमन्यो भवेन्नु ध्रुवम् ।
जाग्रत्यत्र परागुकासुरवरे जागर्ति नो मानवः ,
गर्जत्यत्र च तत्र लौकिकजनः संतर्जितो मूर्च्छति ।। ६३।।

'क्यूबा[1]' कान्डनिदर्शनं भगवति ! त्वेकैक–दिग्दर्शनं, ,
तावन्मात्रविपद्यमानमखिलं विश्वं तदासीन्ननु ।
भूयस्तस्य विजृम्भणं किल वियन्नामाख्यसंख्ये[2] बभौ ,
सम्प्रत्यप्यनिशं क्वचित् क्वचिदपि प्रोद्दाममुज्जृम्भते ।।६४।।

पौलस्त्योऽभवदद्भुतोऽसुरवरो रामायणं संबभौ ,
गीताभारत–मित्युभेऽप्यभवतां दुर्योधनोऽभूद् यदा ।
शुम्भादिष्वपि सत्सु सम्बभुरथो नानापुराणान्यपि ,
सत्स्वेतेष्वसुरेषु नैव जगतो नो वा भवेत् किञ्चन ।।६५।।

काञ्चीमञ्च न रञ्चमात्रमधुना मातर्न केयूरकं ,
नो वा कङ्कणमङ्कशायिनमपि प्रोज्झित्य पुत्रं निजम् ।
दूराद्दूरमुपेक्ष्य भक्तनिकरं यैस्त्वं वृथाऽऽराध्यसे ,
कार्येऽस्मिन् करणीयके भगवति ! द्रागुद्यता तिष्ठतात् ।।६६।।

१—सन् १९६१-६२ इसवीयेवत्सरे क्यूबादेशीय–समस्यामाधारीकृत्य रूसामेरिकामध्ये विवादः समजनि, तत्रामेरिकाद्वारा परमाणुशस्त्रप्रयोगस्योद्घोषणया भूयानातङ्को विश्वस्मिन् समजायतेति वृत्तमनुसन्धेयम् ।

२–अमेरिका वियतनामदेशे दशवर्षाधिकसंग्रामं प्रचकारेति नाविदितं तदविदाम् ।

तत्ते स्मारयितुं स्मरामि शुभदे ? सम्यक् वृत्तं समाकर्ण्यतां,
जातः कश्चन 'हिट्लरो[1]'ऽसुर इवासौ जर्मनीशो भुवि ।
रक्षस्तत्प्रखराणुकासदृशः प्रोद्दण्डसुज्जृम्भणान्,—
'नागाशाकि हिरोशिमा—क्षयमधादापाद्य युद्धस्थलीम् ॥६७॥

दैवात् तत्परमाणुकासुरजनिर्नाभूत्तदानीमहो,
नो चेद् देवि ! तव स्तुतिप्रकरणं नावश्यकं स्यादिदम् ।
त्वत्प्रस्तावक एव एष यदि वा नैवाभविष्यद् यदा,
तत्ते प्रस्तुतिमेव सोऽयमधुना नैवाकरिष्यत्तदा ॥६८॥

नैवावक्ष्यदिदं वचः कटु भवत्कर्णे कदाचित्तव,
नैवाद्रक्ष्यदिदं जगच्च विपदाक्रान्तं मुमूर्षावृतम् ।
नैष्यद् देवि ! तवापि भारवहनं कल्याणवार्ताश्रुतेः,
नैवागास्यदशेषतोऽपि भुवनं त्वन्नामसङ्कीर्तकम् ॥६९॥

नो चैवावतितीर्षया प्रकटनं तेऽसेत्स्यदत्रावनौ,
नो वाऽस्थास्यदियं स्थितिस्तवपुरा गीता पुराणादिषु ।
न प्राक्ष्यत् परिपृच्छया निजजनं कष्टे गतं श्रीमती,
नैवाधास्यदिदं पदं तव भुवि क्वापि प्रतिष्ठापितम् ॥७०॥

देवि ! प्रोन्नतमस्तको गिरिवरो द्रागेव निर्नङ्क्ष्यति,
द्रागेव प्रथिताऽखिलाऽपि वसुधाऽधस्तात्तलं द्रक्ष्यति ।
फूत्कारे प्रभवत्ययि प्रभवति ! प्रोच्चैर्जगद् धक्ष्यति,
जन्तुः क्वापि कुतोऽपि ते स्तुतिमिमां शब्देन नो वक्ष्यति ॥७१॥

साक्षात्काल—कृपाणकर्षदखिल—प्राणानिव प्रोद्गतान्,
देव्येतानणुकासुरान् शिरसि तान् प्रोज्जायमानानपि ।
अन्यांस्तान् प्रजनिष्यमाणघटकान् प्रागुन्मदिष्णूनिमान्
दर्शं दर्शममर्षपूर्णहृदयो दूयेतरामीश्वरि ! ॥७२॥

क्वत्वं क्वाहमये मदम्ब ! भुवने क्वासौ गणेशो गुहः,
क्वास्तु प्रोच्चहिमालयो निशिचरेष्वेतेषु जाग्रत्स्वपि ।
क्वाब्धेः स्यादुपलब्धिरेव महिते ! संरक्षिताऽस्थां क्षितौ,
क्वासौ भारतभारतीयमहिमोद्गाता कविर्मादृशः ॥७३॥

नैके सम्प्रति हिट्लराधिकतरप्राशस्त्यपूर्णास्त्रकृद्—,
विज्ञानाम्बुधि—कूलकर्षणरता लङ्काधिनाथा इव ।
लङ्कातङ्कराः सुरादिनगरीशङ्काकरास्ते नराः,
सर्वत्र प्रसरीसरन्ति भुवनेऽलङ्कातराः प्राणिनः ॥७४॥

मा भूदम्ब ! विलम्बलम्बनमिदं मा भूत्तवान्या गतिः,
मा भूदुत्तमभारतावनिरियं निःशेषिताऽऽत्मश्रिया ।
मा भूदत्र नगाधिराजपदवी किञ्चित्क्षता कुत्रचित्,
मा भूत्ते स्तुतिनाश एष गिरिजे ! मामूत् क्षितेः संक्षतिः॥७५

मा भूदुत्तमदेवते ! तव पुराऽऽविर्भूतिवार्ता वृथा,
मा भूत् कान्तकलेवरेण विहिता रामेण चर्चा च्युता ।
मा भूदम्ब ! कदम्बलम्बित—सखीचीरापहारो मुधा,
मा भूद् देवगणापमानगणना मा भून्ममाप्रार्थना ॥७६॥

मा भूदत्र विराजमानमनिशं क्षीणं जगज्जीवनं,
मा भून्मातरशेषभारतगिरा गीताऽविगीता श्रुतिः ।
माभू दुन्नतसिंहवाहिनि ! महाशक्ति ! त्वयि प्रोच्चकैः
सत्यामत्र परत्र वा त्रिभुवने दुश्चेष्टमानो जनः ॥७७॥

स्याच्चेत्कोऽपि तथा व्यथाप्रद इह क्वाप्यत्रसत्प्राणिनां,
सद्यो नश्यतु स स्वयं न जगती—कल्याणमाबाधताम् ।
भूयांसो यदि सन्ति हन्त ! गिरिजे सन्तः क्रियन्तां समे,
श्यामे ! श्यामलसस्यशालिलसिता स्यादम्बरान्ताम्बरा ॥७८॥

---

१—द्वितीय विश्वयुद्धे हिट्लर-द्वारा कृताक्रमणे ब्रिटेनरूसामेरिकादिमित्रराष्ट्राणि सम्भूय तत्प्रतीकाराय प्रोद्यतानि संबभूवुः, ततश्चामेरिका नागासाकीहिरोशिमा प्रदेशे साम्प्रतिकपरमाणुशस्त्रापेक्षया लघीयः परमाणुशस्त्रं प्राक्षिपत्, तेन तत्प्रदेशस्यास्तित्वमेवास्तमगादिति प्रसिद्धमैतिह्यम् ।

[ क्रमशः

# "नूनं कविर्भास्करः"

श्री कामेश्वर उपाध्यायः

[ गताङ्कात् अग्रिमोंऽशः

अष्टौ व्याकरणानि षट् च भिषजां व्याचष्ट ताः संहिताः
षट् तर्कान् गणितानि पञ्च चतुरो वेदानधीते स्म यः ।
रत्नानां त्रितयं द्वयं च बुबुधे मीमांसयोरन्तरं
सद्ब्रह्मैकमगाधबोधमहिमा धन्यः कविर्भास्करः ॥

अनेन श्लोकेन ज्ञायते यदयमासीत् सर्वेषां विषयाणां ज्ञाता किम्वा सर्वेष्वपि शास्त्रेषु भास्करस्याप्रतिहतगतिरिस्यासीत् । भास्करस्य त्रीणि पुस्तकानि सुप्रसिद्धानि सन्ति—बीजगणितम्, लीलावती, सिद्धान्तशिरोमणिश्च । सिद्धान्तशिरोमणेः द्वौ भागौ विद्येते—गणिताध्यायः गोलाध्यायश्च । 'करणकुतूहलं' नामाख्यकरणञ्चापि निर्मितमनेन । अमुष्य गोलाध्यायो विविधैरलङ्कारैः सम्यक् सुसज्जितो नानाविधनवचमत्कारहारैर्मण्डितो मनो मोहयति । अतोऽस्य क्रमशः सोदाहरणं काव्यमुपस्थाप्यते ये जनाः व्याकरणं विदन्ति ते सर्वं शास्त्रं ज्ञातुं शक्नुवन्ति, व्याकरणं विना न किमपि सिध्यति ।

"यो वेद वेदवदनं सदनं हि सम्यग्
ब्राह्मयाः स वेदमपि वेद किमन्यशास्त्रम् ।
यस्मादतः प्रथममेतदधीत्य धीमान्
शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ॥ गो० ८ ॥

वस्तुतस्तु स एव कस्यापि शास्त्रस्याधिकारी यो व्याकरणं वेत्ति, अन्यथा स सभायां मूढतां भजति—

"वादी व्याकरणं विनैव विदुषां धृष्टः प्रविष्टः सभां
जल्पन्नल्पमतिः स्मयात्पटुबटुभ्रूभङ्गवक्रोक्तिभिः ॥गो-६॥

( श्लोकेऽस्मिन् अनुप्रासस्य रमणीया छटा चेतांसि मोदयति । ) तेनैव कारणेन लिख्यते भास्करेण—चेद् मम विरचितगोलं श्रोतुं तव मतिर्विद्यते तर्हि शृणु—

लीलागम्यः सुललितपदः प्रश्नरम्यः स यस्माद्
विद्वन् विद्वत्सदसि पठतां पण्डितोक्तिं व्यनक्ति ॥ तत्रैव

वस्तुतस्तु पद्येऽस्मिन् रम्यत्वं विद्यत एव । एवम्विधाः पदे पदे ललितानां पद्यानां समाहाराः संदृश्यन्ते । जम्बूद्वीपमध्ये गिरिनिवेशवशेन नव खण्डानि वर्ण्यन्ते । यथा—

माल्यवज्जलधिमध्यवर्ति यत्तत् तु भद्रतुरगं जगुर्बुधाः ।
गन्धशैलजलराशिमध्यगं केतुमालकमिलाकलाविदः ॥
निषधनीलसुगन्धसुमाल्यकैरलमिलावृतमावृतमाबभौ ।
अमरकेलिकुलायसमाकुलं रुचिरकाञ्चनचित्रमहीतलम् ॥३०॥

मनोहराणां द्वीपानां वर्णनमाचार्यैः सम्यक्कृतम् । पुनश्चात्र सुरासुराणां नागानाञ्चावासस्थानं सूचयति—

चञ्चत्फणामणिगणांशुकृतप्रकाशा
एतेषु सासुरगणाःफणिनो वसन्ति ।
दीव्यन्ति दिव्यरमणीरमणीयदेहैः
सिद्धाश्च तत्र विलसत्कनकावभासैः ॥२४॥

यावत्परिमिताः सूर्यस्य रश्मयः ततः परमन्धकारस्य विस्तर इति वर्णयन् कथयति—

करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम् ।
दिनकरकरनिकरनिहततमसो नभसः परिधिरुदितस्तैः ।६८।

गोलाध्याये एव चन्द्रमसः स्थितिमुपवर्णयन् उपमा प्रस्तूयते—

तरणिकिरणसङ्गादेष पीयूषपिण्डो
दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति ।
तदितरदिशिबालाकुन्तलश्यामलश्रीर्घट
इव निजमूर्त्तिच्छाययैवातपस्थः ॥ १ ।

कालिदासोऽप्यतिक्राम्यते भुवनभास्करेण भास्कराचार्येण । यथा निजवेण्याऽऽवृत्ता बाला श्यामा प्रतिभाति तथैव गगने हिमकरोऽपि निजमूर्तिच्छायया भाति ।[1]

महाकविना भास्करेण कविताप्रदर्शनाय ऋतुवर्णनं कृतम् । तत्र वसन्तमधिकृत्यप्रथमः । श्लोकः—

उत्फुल्लन्नवमल्लिका परिमलभ्रान्तभ्रमद्भ्रामरे
रे पान्थाः ? कथमन्यथानि भवतां चेतांसि चैत्रोत्सवे
मन्दान्दोलितचूतनूतन — घनस्फारस्फुरत्पल्लवै—
रुद्वेलन्नववल्लरीोष्विति लपन्त्युच्चैः कलं कोकिलाः ॥१॥

शार्दूलविक्रीडितं वृत्तमत्र माधुर्यगुणः प्रचुरः ।

पुनश्चैकेन श्लोकेन तत्कृतं ग्रीष्मवर्णनं प्रस्तूयते—

निदाघदाहार्तिविघातहेतवे
वनाय कामोच्छ्रितचूतकेतवे ।
व्रजन्ति वापीजलकेलिलालसा
शुचौरतिस्वेद-गलज्जलालसाः ॥४॥

अत्र शब्दच्छटा यथा सुखकारिणी तथैव भावभङ्गिमाऽपि विस्मयकारिणी । मन्ये माघोऽपि पराहतः कविना । वंशस्थवृत्तमिदम् ।

वर्षायाः सरसवर्णनमत्र लोकस्यानन्दकारणमिति निश्चित्य ग्रीष्मातपेन दग्धान् जनान् सुरभिवातेन मोदयति काव्यकलाविद् भास्करः—

मदनदहनखिन्नामागतेऽप्येत्यकाले
परिमलबहलानांमालतीनां नदीनाम् ।
अदयदयित सिञ्चस्यात्मदृग्वारिणा किं
परिमलबहलानां मा लतीनां न दीनाम् ।।६।।

अस्माकं दृष्टौ भास्करः वस्तुतस्त्वेवैकएवैतादृशः कविर्यो ग्राम्यजनानां वास्तविकीं स्थितिं द्वादशीये खीष्टाब्दे स्वकवितायां सुस्पष्टं वर्णितवान् यथा—

सहस्यकालेबहुशस्यशालिनीं
चितामवश्यायकमौक्तिकोत्करैः ।
प्रहृष्टपुष्टाखिलगोकुलामिलां
विलोक्य हृष्यन्त्यधिकंकृषीवलाः ।। ६ ।।

यथा प्रचुरपुष्पभारसमृद्धेन शिशिरेण काननमपि नवीनत्वमादधाति तथैव भास्कराणां कविताकलाकुसुमितैः प्रचुरश्लोकैः भुवनानि नन्दन्ति—

अरुणनीलनिमीलितपल्लवं प्रचुरफुल्लसमुल्लसनैः श्रियम् ।
वहति काञ्चनकाञ्चनकाननं नवतरां नितरां शिशिरागमे ।।१०।।

के च ते सहृदयाः ये भास्करस्य कृतौ न रमन्ते ? यथा तेनैव—

त्रिदिवमधरयन्तस्तीरपङ्क्तेन नाना
रुचिरसिकतया वाश्लेषिताङ्गैः सुवृत्तैः ।
कृतिन इह रमन्ते रम्यसारस्वतौघे
रुचिरसिकतया वा श्लेषिताङ्गैः सुवृत्तैः ।।१५।।

गणकाः सिद्धान्तहीनाः तथैव न शोभन्ते यथा मदविलासोन्मत्त करिं विना नृपतेः चमूः, आम्रं विना वाटिका, जलं विना सरः, नूतना बाला प्रियं विना चेति—

---

१—मेघदूते कालिदासोऽपि नैसर्गिकीमुपमां समुपस्थापयति यथा—

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रैः, त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे ।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां, मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ।।

श्रीपतिरप्याह—

धाम्ना धामनिधेरयं जलमयो धत्ते सुधादीधितिः
सद्यः कृत्तमृणालकन्दविशदच्छायां विवस्वद्दिशि ।
हर्म्ये घर्मधृणेः करैर्वट इवान्यस्मिन् विभागेपुनर्
बालाकुन्तलकालतां कलयति स्वच्छां तनोश्छाया ।।

गुर्जत्कुञ्जरवर्जितानृपचमूरप्युजिताश्वादिकं
रुद्यानंच्युतचूतवृक्षमथवा पाथो विहीनं सरः ।
योषित प्रोषित्–नूतनप्रियतमायद्वन्नभात्युचकं–
ज्योतिःशास्त्रमिदं तथैव विबुधाः सिद्धान्तहीनं जगुः ॥

सत्यं तु, विनोक्तिरलङ्कारमुखेन सिद्धान्तप्रशंसा एव कृता । लीलावत्याः मङ्गलाचरणे महाकवेः शब्दच्छटा दर्शनीया- यथा–– लीलागललुलल्लोलकालव्यालविलासिने ।
गणेशाय नमो नीलकमलामलकान्तये ॥१॥

यदपि गणितं नीरसशास्त्रमत्र न कश्चित्सन्देहः तथापि भास्कराय नेदं युक्तियुक्तकथनम् । संस्कृतशिक्षणहेतवे यथा एकमेव पञ्चतन्त्रं पर्याप्तं तथैव गणिताय अलं लीलावती । सुश्राव्यः गणितस्यश्लोकः, मनोहरः सम्बोधकश्च यथा––
बाले बालकुरङ्गलोलनयने लीलावति ! प्रोच्यताम् ···
रूपस्थानविभागखण्डनगुणे कलासि कल्याणिनि ! ··
नवघनं त्रिघनस्य घनं तथा कथय पञ्चघनस्य घनं च मे ।
घनपदं च ततोऽपि घनात् सखे,
यदि घनेस्ति घना भवतो मतिः ॥

अत्रानुप्रासस्य छटा गणितेऽपि मनोहरत्वमाह्लादकारकत्वञ्चोपस्थापयति । पूज्यपादैः कविवर्यैः गणितप्रहेलिका श्लोकमुखेनोपस्थापिता यथा––

यातं हंसकुलस्यमूलदशकं मेघागमे मानसं,
प्रोड्डीय स्थलपद्मिनीवनमगादष्टांशकोऽम्भस्तटात् ।
बाले ! बालमृणालशालिनिजलेकेलिक्रियालालसं,
दृष्टं हंसयुगत्रयं च सकलां यूथस्य संख्यां वद ॥

अत्र केलिक्रियानिरतानां मानसं गतानां सर्वेषां हंसानां संख्या संक्षेपेण १४४ इति । प्रहसनमत्र दर्शनीयम्––
"प्राप्नोति चेत्षोडशवत्सरा स्त्रीद्वात्रिंशतं, विंशतिवत्सरा किम् ?"

विंशतिवर्षीयाणां बालानां मूल्यमपेक्षाकृतमल्पं गणितेन २५६ रूप्यकाणि भवन्ति । अप्येकं भास्करस्य ललितमुदाहरणं द्रष्टव्यम्––

चक्रक्रौञ्चाकुलितसलिले क्वापि दृष्टं तडागे––
तोयादूर्ध्वं कमलकलिकाग्रं वितस्तिप्रमाणम् ।
मन्दं मन्दं चलितमनिलेनाहतं हस्तयुग्मे
तस्मिन् मग्नं गणक ! कथय क्षिप्रमम्भः प्रमाणम् ?

मन्ये कालिदास एवावतरितः लीलावत्यां भास्कराचार्यरूपे । ईदृशस्य मन्दाक्रान्ता वृत्तस्य सुष्ठुसन्निवेशः केवलं 'मेघदूत' एव विद्यते नान्यत्र ।

अनेनैव प्रकारेण सर्वत्रैव स्वचण्डकिरणैरालोकयन्तो जगतः साहित्यज्योतिषादि निःसीमे नगनाङ्गणे भास्कराचार्यमहोदयाः अभिभासन्ते । को नाम लोकेऽस्य महाकवेः प्रज्ञामतिक्रमितुं समर्थः ? मन्ये भगवान् भास्कर एव स्वतेजोमयमूर्त्तिविधानेन साक्षाद्धृतशरीमवनितलमागतः अन्यथा कथमेकत्र सर्वेषां विषयाणां संयोगोऽभवदितिविचारणीयो विषयः । उदयान्तरसंस्कारः भास्करस्योपलब्धिः सर्वथा नवीना हृद्या ग्राह्या च । कुट्टकचक्रवालवर्गप्रकृति प्रभृतयः विषयाः भास्करस्यान्वेषणम् । एवं विधेषु अन्येष्वपि विषयेषु संस्कारान् कुर्वन् भास्करः सर्वथैव श्लाघ्यः । इत्यस्तिकारणं प्रसिद्धेः तथाऽन्यदपि यद् भास्करस्य एष महाकविर्धर्मशास्त्रानुसारमेव कुत्रापि पदं निदधाति । तस्य गणितज्ञानं भाषायाः प्रवाहे न बाधको मन्ये साधक एव । नीरसगणितमपि कवितारसप्रवाहे रसिकानां मनसि स्थैर्यमेव दधाति । अतो नुमो वयं महाकविं नित्यम्, प्रतिदिनम् प्रतिक्षणञ्च । अन्ते च ममैव –

ज्योतिर्बोधनिधिः सुकालकलने वाणीविलासे तथा
यः सौभाग्यवतीं धरां निजगुणैरालोकयत्यन्वहम् ।
एकोऽयं भुवने विभाति किरणैश्चण्डप्रभाधायकैः
का भाषा भवभूतिवाणविदुषां नूनं कविर्भास्करः ॥

# एका रजनी

आचार्यः सेतुबन्धः

संयोजकः विश्व-संस्कृत-प्रतिष्ठानम्, वाराणसी

दिनं तु प्रपञ्चे एव व्यतीतम् । त्रिदिवसादतीव शैत्यं प्रसरति । शयनात् प्राक् इतस्ततः विकीर्णेषु पुस्तकेषु अकस्मादिव दृष्टिरापतत् । तेषु काव्यप्रकाशाख्यस्य कानिचित् पृष्ठानि आलोक्य पुनः तत्रैव तन्निक्षिप्तम् । तथा च तूलिकाशरणं गतवान्निति । अतः परं यावत् नेत्रे निमीलिते तावदेव कश्चित् पादध्वनिः कर्णपथमागतः । प्रतीयते स्म यत् कक्षे केनापि प्रविष्टम् । एवं च घोरे शैत्ये अतीतायां रात्रौ कः खलु भवितुमर्हतीति संकल्प-विकल्पे एव नेत्रे उन्मीलिते । पुरत एव आसन्दिकायां शुभ्र दीपे श्मश्रूमन्तं धवलकेशं, गौरवर्णं गभीरचिन्तन-रेखायुतललाटं चिन्तामग्नं महार्हेणोत्तरीयेणावेष्टितं निर्निमेषदृष्ट्या मामवलोकयन्तमेकं शरीरिणम् अपश्यम् । पश्यन्नेव स्थातुं नापारयम् । करौ सम्पुटीकृत्य मया उक्तम्—

अदृष्टपूर्वो भवान् । अलौकिकञ्च भवदीयं तेजः । भद्रं च परिधानं, सौम्याकृति, कान्तमिदं वपुः कस्मिन्मनसि श्रद्धां नोत्पादयिष्यति । यद्यपि लज्जे श्रीमतः परिचयं प्रष्टुं तथापि कौतूहलं मां मुखरयति । क्षमस्व । को भवान् ? केन निमित्तेन च दुःसह्यम् शैत्यं सहित्वा 'अत्रागतवान् ?"

"मम परिचयमवजिगमिषसि ।" हन्त ! ...अस्तु—अहं जैयटसुतो हतभाग्यो मम्मटोऽस्मि ।"

भवान् म म्मटः चकितो भावविह्वलश्चाऽहं मुहूर्तं विरम्य अवदम् । आः पुण्यवान्नस्मि । अविस्मरणीया चेयं रजनी । दर्शनसौभाग्यं मह्यं प्रदाय आपूरितं मे हृदयम् आनन्दौघेन । विलोकयदश भवन्तं नरीनृत्यते मे मनः । भवदीयेन काव्यप्रकाशेण न केवलं संस्कृत समाज एव उपकृतः प्रत्युत सर्वासां भाषाणां काव्यरसज्ञानां जिह्वोपरि भवदीयं काव्य लक्षणमेव विराजते । किन्तु भवतः स्वस्मै 'हतभाग्य' शब्द प्रयोगेण मे मनः दूयते । आज्ञापयतु भवान् । भवते किं प्रियं करणीयमित्यग्रिमां विवक्षामवरुध्य संजातकातरभावः गभीरर-वेण मम्मटः प्रत्यवदत् ।

'अलमिति जल्पनया । अस्यां देवभूमौ, अस्मिन् च भारतवर्षे ईदृशी कृतघ्नता भविष्यतीति कल्पनापि नासीत् । यूयं सर्वे—'कृतघ्नस्य नास्ति निष्कृतिरियुक्तिमपि सर्वथा विस्मृतवन्तः । यतो हि अहं कश्मीर-निवासीति ज्ञात्वाऽपि कश्मीरस्थे कस्मिन् स्थाने मम जन्म जातमिति न अन्वेषितवन्तः । मन्ये यत् दीर्घकालान्तरालेन मम जन्म स्थानस्यान्वेषणं कठिनं किन्तु किं कस्मिंश्चिदपि प्रस्तरशिलायामुत्कीर्णः ममनामकः राजमार्गोऽपि न भवितुमर्हति स्म ? हन्त ! न केवलमहमेव भारतवासिभिः विस्मृतः । अपि च अभिनवगुप्त-क्षेमेन्द्र-कल्हण-विल्हणादयो भारतीयानां कृतघ्नतां वीक्ष्य नितरां तातप्यन्ते ।" एवं निगद्य यथा आगतवान्नासीत्-तथैव गतः ।

चिन्तायामेव मदीया रात्रिर्गता । ततः प्रभृति मम्मटस्य वेदना मे चित्तं व्यथयति । किं तेषां कवीनां जन्मस्थानस्यान्वेषणस्य अस्माकं दायित्वं नास्ति ? नो चेत् इदं कस्य दायित्वम् ।

# काव्यस्यात्मा ध्वनिः

## आचार्याः

काव्ये ध्वनिः द्विविधः[1] परिगण्यते। अभिधामूलः ध्वनिः लक्षणामूलश्च। वाच्यत्वेनैव चारुत्वप्रतीतेः वाच्यो ध्वनिरिति अभिधानम्। एवमेव प्रतीयमानार्थतत्त्वमाध्यमेन चारुत्व-प्रतीतेः अविवक्षितवाच्य-ध्वनिरिति व्यपदेशः भवति। अतएव साहित्यशास्त्रे नियमः भवतिः—

"चारुत्वोत्कर्षनिबन्धना वाच्यव्यंग्ययोः प्राधान्य-विवक्षा"।

ध्वनौ तारतम्यम्—

यत्र वाक्यार्थप्रयोगे श्रोतुः रम्यार्थप्रतिपादकत्वात् विशेषतया आनन्दोपलब्धिः तत्रैवोत्तमकाव्यत्वमिति मन्यन्ते साहित्यिकाः। यद्यपि आनन्दोपलब्धिस्तु गुणालङ्कारा-भ्यामपि भवति किन्तु व्यंग्याभिव्यञ्जनसामर्थ्यमेव गुणत्व-मिति न्यायानुसारं गुणध्वन्योः पार्थक्यम् निश्चितम्। एव-मेव आनन्दोपलब्धौ समुपकारकाः अङ्गेषु हारादिवद-लङ्काराः अपि भवन्ति प्रार्थक्यप्रथिता एव। इति तु निश्चप्रचं यत् काव्ये रमणीयता रस-ध्वनिसद्भावेनैव भवति! आनन्दोपलब्धेः स्तरमवेक्ष्य एव उत्तमता मध्यमता अधमता च स्थिरीक्रियन्ते। यस्मिन् पद्ये काव्ये वा अम्भसां सर्वतो-मुखीनप्रवाह इव ध्वनेः सार्वात्म्येन प्रवाहपूरता परिलक्ष्यते यत्र वा गुणालङ्कारभावाभासरीतिरसाभासादीनां तो योत्थितानि तरङ्ग-भङ्गविभ्रमाणि प्रेक्षकपाठकापाङ्गेषु पारावारं न प्रवाहयितुं पारयन्ते, तत्र कथं रसत्वं स्वी-क्रियेत ध्वनित्वं वा ध्वन्यमानमङ्गीक्रियेत!

अन्यया दृष्ट्या काव्यं सरसनीरसाभ्यां भेदाभ्यां व्यवच्छिद्यते। रससिद्धत्वात्कवीश्वराणां काव्यस्य सरस-त्वम् प्रशस्यतमं मन्यते। नीरसे काव्ये नाकर्षणम् सचेत-साम् तदपि गुणालङ्कारप्राधान्यत्वात् गुणवत्काव्यं सालङ्कारं काव्यमिति व्यपदेशाः विद्वत्सु प्रचलिता एव। यथा भामहोक्ते—

गतोऽस्तमर्को, भातीन्दुर्यान्ति वासाय पक्षिणाः।
इत्येवमादिकं काव्यं वार्त्तामेनां प्रचक्षते॥ १

इत्यादि श्लोके रसस्य असद्भावात् वार्त्तामत्वमेव स्वीकृतम्।

ध्वनिस्वरूपम्—

काव्यं द्विविधं, ध्वनिगुणीभूतव्यंग्यश्च। तत्र ध्वन्यते-ऽस्मिन्निति ध्वनिः, ध्वन्यतेऽनयेति ध्वनिः, ध्वननं ध्वनिः ध्वन्यते इतिध्वनिरित्येवंरूपेषु विग्रहेषु सत्सु ध्वनिपदार्थस्य निष्कर्षः भवति रसादिव्यंग्यव्यञ्जकः शब्द एव ध्वनिः। शब्दतः अर्थस्यैकात्म्यमङ्गीकुर्वताम् विद्यावतां विचारविषयः 'वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये' इति श्लोकः। शब्दार्थानुसन्धाने वाच्यार्थातिशायिनि व्यङ्ग्यार्थे विशेषतः रुचिः सहृदयानाम् स्वाभाविकी भवति। यतः वाच्यार्था-पेक्षया व्यंग्यार्थे चामत्कारिकता चित्तं चोरयत्येव। अतएव सर्वैः स्वीक्रियते यत् वाच्यातिशायिनि व्यंग्येऽर्थे ध्वनि र्भासते। वैयाकरणाः अदूष्यवैदूष्याः विद्वान्सः ध्वनिं शब्द-विशेषमेव स्वीकुर्वन्ति। यदा शब्दा बुद्धिस्था भवन्ति, तदै-वार्थबोधः जायते। यदा शब्दस्य उच्चारणं भवति तदा शब्दोच्चारणानन्तरं अन्यश्रुतिगोचरत्वेजाते, तस्य बुद्धिस्थ-स्य भावस्य अन्यकर्तृकः बोधः भवति। स्फोटपदार्थस्य ध्वनिपदार्थस्य च श्रोत्रग्रहणानन्तरमेव व्यवहारः काव्ये

१—काव्यालं २।८७

शास्त्रे वा भवति। यदा प्रयोक्तुः बुद्धिस्थो शब्दः भवति, तदा प्रयोक्तुः मनसि याः भावनाः कल्पनाः उन्मिषन्ति तासां न तावद् कोऽप्युपयोगः, यावत् तासां शब्दरूपेण कार्यात्मना उच्चारणं न भवति! अतएव प्रतीयते यत् अभिव्यक्तिवादिनः विद्वान्सः शब्दस्यार्थस्य चोभयोः माहात्म्यं सहैव स्वीकुर्वन्ति तत्रापि वाच्यार्थातिशायिनि व्यंग्ये चमत्कारातिशयात् आनन्दसन्दोह-सदुपलब्धिसहकाराच्च तत्रैव ध्वनिमुत्तमकाव्यरूपेण स्वीकुर्वन्ति। उत्तमस्य काव्यस्य उदाहरणं यथा—

कदली कदली करभः करभः
करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि विभर्त्ति
तुलामिदमूरुयुगं न चमूरुदृश॥:

इत्यस्मिन् पद्ये जाड्यातिशयत्वं व्यज्यते। जाड्याद्यातिशयादेवैतानि चमूरुदृशः ऊरुयुगलतुलां नाधिरोहन्ति। इमं व्यापारं, येनार्थप्रतीतौ विशेषतः परमानन्दसन्दोहदोहनं भवति, साहित्यिकाः विद्वांसः अलौकिकं व्यापारमङ्गीकुर्वन्ति।

# वेदाङ्गेषु निरुक्तस्य स्थानम्

ले०—श्रीमान् रघुनाथ पाठकः, प्राध्यापकः श्री दुर्गा जी महाविद्यालय चंडेश्वर, आजमगढ़ ( उ० प्र० )

भारतीये वाङ्मयेऽक्षयनिधेःश्रुतेः संरक्षणे संवर्धने च सततं प्रयतमानं दृश्यतेतमामृषिकुलम्। तत्र प्रतिभाघनै ऋषिभिः श्रुति परम्परया रक्षणाद्वेदस्य श्रुतित्वं विदितम्। पुरातनास्ते साक्षात्कृत ज्ञानात्मक वेद विद्या विधायकाः बभूवुः। ते परवर्तिभ्यो ज्ञानपिपासुभ्यः प्रवचनेन मन्त्रान् सम्प्रादुः किन्तु तद्रूपे तज्ज्ञानगौरवग्रहणे तेषामक्षमत्वात्प्रारब्धा वेद-वेदाङ्ग-ग्रन्थानां निर्माणपरम्परा।

अत्र यास्को ब्रूते—

"साक्षात्कृतधर्माणः ऋषयो बभूवुः। ते अवरेभ्यः असाक्षात्कृतधर्मभ्यः उपदेशेन मन्त्रान् सम्प्रादुः। उपदेशाय ग्लायन्तः अवरेबिल्म ग्रहणाय इमं ग्रन्थं समाम्नासिषुः वेदं च वेदाङ्गानि च।"[1] फलतो विकसिते वैदिक वाङ्मये वेदानामध्ययने वैदिक-कर्मणाञ्च सम्पादने वेदाङ्गानां ज्ञानममन्यतापरिहार्यम्।

ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयोज्ञेयश्चेति महाभाष्यकारेण महर्षि पतञ्जलिना महाभाष्यस्य पस्पशाह्निके यदवर्णितं वेदाध्ययने न वेदज्ञाने च षडङ्गस्य महत्वमतितरां सुस्पष्टं भवति। विद्या द्विविधा—परऽपरा चेति।

1—निरुक्त १।१२०

वेदषड्ङ्गादीनामपरविद्यात्वमुपनिषदां परविद्यात्वञ्च।[1] षडङ्गेषुशिक्षा, व्याकरणम्, कल्पो, निरुक्तम्, छन्दो, ज्योतिषञ्चेति महर्षिपाणिनिना प्रोक्तम्——

'छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुः निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतं,
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥''[2]

विद्वद्वर्येण भास्कराचार्येण स्वकीये 'सिद्धान्त-शिरोमणौ' गणिताध्यायेऽपि एवमेव प्रकाशितम्——

''शब्द शास्त्रं मुखं ज्योतिषं चक्षुषी,
श्रोत्रमुक्तं निरुक्तञ्च कल्पः करौ।
या तु शिक्षाऽस्य वेदस्य सा नासिका,
पादपद्मद्वयं छन्द आद्यैर्बुधैः॥''

वेदाध्ययने अतिगम्भीरस्य वेदार्थस्यावबोधने च सर्वेषां वेदाङ्गानां महत्वसत्वेऽपि निरुक्तस्य स्वकीयं महत्वपूर्णं वैशिष्ट्यमिति प्रकाशयितुं विवेचनं प्रस्तूयते——

विद्ज्ञाने, विद्विचारणे, विद्लृ लाभे, विद्सत्तायामिति धातोर्निष्पन्नो वेदशब्दः ज्ञानविज्ञानवाचकः जीवन-स्याध्यात्मिकभौतिकसांस्कृतिक विचाराचार प्रकाशकः।

स्वरवर्णाद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षेति ऋग्वेदभाष्य भूमिकायां सायणाचार्येण स्पष्टं प्रतिपादितम्। स्वरवर्णाद्युच्चारणस्य महत्वं नाविदितम्। यतो हि——

''मन्त्रो हीनः स्वरतोवर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोपराधात्॥

[ पा० शि०—५२ ]

परमेतादृशवैशिष्ट्यसम्पन्ना शिक्षा स्वरवर्णाद्युच्चारणेन यथायथमुपदेशेन वेदस्य भौतिक रूपाणां शब्दानां व्याख्यान मात्रमेव सम्पादयति।

व्याकरणाद्विभक्त्यादिपरिज्ञानं भवति। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणमिति। महाभाष्ये पश्पशाह्निके यदुक्तं तेन शब्दानां व्युत्पादनं शब्दानुशासनञ्च व्याकरणमिति। तत्र शब्दानुशासनस्य महत्वं स्पष्टयितुम् ऋग्वेदान्मन्त्रा गृहीताः।

चत्वारिश्रृङ्गा त्रयो अस्य पादा
द्वे शीर्षे सप्त हस्तासो अस्य।
त्रिधावद्धो वृषभो रोरवीति
महोदेवो मर्त्यान् आविवेश॥ इति

नैरुक्ताणां व्याख्यानात् महर्षेः पतञ्जलेर्व्याख्या 'महाभाष्ये' भिन्नार्थिका। चत्वारि श्रृङ्गाणिसन्ति पद जातानि। नामाख्यातोपसर्गनिपाताश्च। धातवो धातुरूपाणि चाख्यात-संज्ञकानि भवन्ति। अविकार्यश्चादयो निपातसंज्ञकाः। पादाः कालरूपाः। त्रयः कालाः। भूतभविष्द्वर्तमाना इति। द्वेशीर्षे। द्वौ शब्दात्मानौ नित्यः कार्यश्च। सप्त हस्तासो अस्य। सप्त विभक्तयः। प्रथमा, द्वितीया, तृतीया चतुर्थी, पञ्चमी, षष्ठी, सप्तमीति। त्रिधा वद्धः कथम्? महाभाष्यानुसारं त्रिषु स्थानेषु वद्धः वृषभोऽयम्। त्रिषुस्थनेषु कुत्र? उरसिकण्ठे शिरसीति। महोदेवो मर्त्यान् आविवेश। महान् देवः कः? पतञ्जलिः शब्द इति गृह्णाति। महान्देवः शब्दः मर्त्यान् मरणधर्माणो मनुष्यान् आविवेशेति निर्वर्ण्य सिद्धान्तं स्थिरीकरोति। महता देवेन नः साम्यं यथा स्यादित्यध्येयं व्याकरणम्। अतो वेदस्यार्थ प्रत्यायने व्याकरणं न सर्वार्थसाधकमिति।

१——द्वे विद्ये वेदितव्ये इति हस्म यद ब्रह्मविदो वदन्ति, परा चैवाऽपरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणम् निरूक्तं छन्दो ज्योतिषा मिति। अथ परा 'यया तदक्षरमधिगम्यते' [ मुण्डकोपनिषद १।१।४–५

२——पाणिनीय शिक्षा ४१–४२

'छन्दांसि छादनात्' निरुक्त ७।३ इति निष्पन्नेन छन्दशब्देन वेदे प्रयुक्तानां मन्त्राणां गायत्रीत्रिष्टुब्जगत्यनुष्टुप् पङ्क्तिबृहती उष्णिगादीनि छन्दांसि मन्त्र रचना प्रकाराण्यवसेयानि वेदाध्ययने छन्दसः ज्ञानमावश्यकमतो बृहद्देवतायामुक्तम्—

"अविदित्वा ऋषिः छन्दो दैवतं योगमेव च।
योऽध्यापयेद् यजेद् वापि पापीयान् जायते तु सः॥[1]

परं छन्दांसि न तु वेदार्थंप्रतिपादकानीति स्पष्टम्।

कल्पो वेद-विहितानां कर्मणामानुपूर्व्येणकल्पना शास्त्रमिति ऋक्प्रातिशाख्यानुसारेण ज्ञायते। कल्पस्य व्युत्पत्त्यर्थस्तु कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति। श्रौतसूत्र, गृह्यसूत्र, धर्मसूत्र, शुल्वसूत्रादयः कल्पसूत्रस्य प्रकाराः वेद विहित श्रौताग्नि-गृह्याग्नियज्ञानां वर्णाश्रमकर्त्तव्यानां यज्ञ वेदिनिर्माणे विशिष्टसिद्धान्तानां वर्णनं सम्पादयन्ति। अतः कल्प-यज्ञ-विधीनां कर्मणाश्चोद्घाटकः न तु मन्त्रार्था वबोधकः।

"वसन्ते ब्राह्मणोऽग्निमादधीत ग्रीष्मे राजन्यः आदधीत शरदि वैश्य आदधीत।' इति तैत्तरीय ब्राह्मण १।१।२ वाक्यानुसारेण यज्ञ कालार्थसिद्धये ज्योतिषं महत्वपूर्णम्। कालविशेषविधयश्चापि भवन्ति यथा सम्वत्सर विधयः (सम्वत्सरमेतद्व्रतंचरेत्-तै० आ० १।३।२।१) मास-विधयः ('मासि-मासि सत्र पृष्ठानि उपयन्ति, मासि मासि अतिग्राध्या गृह्यन्ते'—तै० सं०-७।५।१।५) एवमेव पक्षविधयः तिथिविध्यादयः। यज्ञार्थ समय निरूपणं ज्योतिषस्य प्रधान प्रयोजनमिति। वेदस्यार्थाववोधने न किञ्चिदस्य प्रयोजनम्।

उपर्युक्तान्येतानि पञ्चाङ्गानि वेदस्य बाह्य तत्वानि शब्दोच्चारण प्रकारादीनि सन्ति। परं वेदस्यान्तरिकतत्त्व परिज्ञानार्थप्रकाशनाय च निरुक्तमेव साधनम्। यतो हि ऋग्वेद भाष्यभूमिकायां सायनाचार्येण प्रकटितम्—
"अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तम्"। वेदस्यार्थप्रत्यायनं महत्वपूर्णमिति विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि' इति निरुक्तोद्धृतेनवचनेन प्रमाणितं भवति। पुनश्चार्थ ज्ञानाय न निरुक्तादृतेऽन्यान्यङ्गानि समर्थतराणीति वेदाङ्गेषु निरुक्तस्य स्थानं स्पष्टमेव।

पाणिनीय शिक्षायां 'निरुक्तं श्रोत्रमुच्यते' इति कथनं वेदपुरुषस्य श्रोत्रत्वमभिव्यञ्जयति। शब्दस्य सम्बन्धः श्रोत्रेणैवास्ति। 'आकाश गुणः शब्दः'[2] इति प्रतिपादयता यास्काचार्येण श्रोत्रस्य विषयः आकाशदेशः तस्य गुणः शब्दश्चेति संकेतितम्। शब्दः ब्रह्म स्वरूपः सकलप्रत्यायनक्षमः। ब्रह्मस्वरूपस्य शब्दतत्वस्याचार्येण भर्तृहरिणा वाक्य पदीये सातिशयोल्लेखः कृतः—

"अनादि निधनं ब्रह्म शब्दतत्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥[3]

यदि वेदे शब्द ब्रह्मणः अस्तित्वं विद्यते तत्श्रोत्रस्य विषयः। पुनः निरुक्तस्य श्रोत्रत्व प्रतिपादनेनार्थसमन्वितस्य शब्दब्रह्मणः सङ्केतः स्पष्टः। अर्थवत्वे सति शब्दस्य शब्दत्वमिति नाविदितं विद्वद्भिः। यथा जगतः निर्माणे प्रकृतिपुरुषयोरन्योन्याश्रयत्वमपेक्षितं तथैव वाङ्मयेऽपि शब्दार्थयोरन्योन्याश्रयत्वमावश्यकम्[4]। शब्दं विनाऽर्थंप्रकाशनमाधारहीनमसम्भवमर्थहीनस्य शब्दस्य प्रकाशनमप्यनर्थकमेव।

शब्दानामर्थस्तेषां प्राणस्वरूपः। पाणिने 'अर्थवद्धातुरप्रत्ययः प्रातिपदिकम्'[5] इति सूत्रानुसारेण निरर्थकस्य शब्दस्य प्रातिपदिकार्थयोग्यत्वं सुविदितम्। यथा प्राणसत्वे

१—बृहद्देवता ८।१३६　　२—नि० १४　　३—वाक्यपदीय १।१　　४—"वागर्थाविव सम्पृक्तौवागर्थंप्रतिपत्तये। जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥" रघुवंशः १।१　　५—अष्टाध्यायी।१।२।४५

देहसत्ता, प्राणरहितस्य देहस्य न तु व्यक्तिसंज्ञा, तस्य शरीरस्योपयोगित्वमपि नास्ति । तथैवार्थ रहितः शब्दः निर्जीवस्वरूपः । पुनः निर्जीवस्यार्थ रहितस्य शब्दस्य प्रयोगो नैव भवति । वेदे प्रयुक्ताः सर्वे शब्दाः अर्थयुक्तास्तेषां शब्दानामर्थ–प्रकाशनं निरुक्तेनैव यतो हि निरुक्तस्य वृत्तिभूमिकायां स्पष्टम्——

"प्रधानञ्चेदमितरेभ्योऽङ्गेभ्यः सर्वशास्त्रेभ्यश्चार्थ–परिज्ञानाभि निवेशात् । न च निरुक्तादृतेऽन्यदङ्गमन्यद्वा बाह्य शास्त्रमस्ति, तात्पर्येण यदशेषान् शब्दान् निब्रूयात् । यदपि च क्वचित् क्वचिदन्यशास्त्रे शब्द–निर्वचनम्, अतएव तदित्युपलक्ष्यम् ।

यथा शब्द लक्षण परिज्ञानं सर्वशास्त्रेषु व्याकरणात् । एवं शब्दार्थनिर्वचन परिज्ञानं निरुक्तात् । न च निरुक्तो मन्त्रार्थो व्याख्यातव्यः इति । तस्मादर्थपरिज्ञानाभि-निवेशादिदमेव प्रधानमिति ।

वेदज्ञाने द्वे साधने अपेक्ष्यते । प्रथमं बाह्य साधनभूतं वेदस्य यज्ञस्य वा बाह्यस्वरूप-प्रकाशकं छन्दः, कल्पः शिक्षा, व्याकरणं, ज्योतिषञ्चेति पञ्चाङ्गम् । वेदाध्ययनस्यान्तरिक-साधनञ्चास्त्यपरम् येन वेदार्थप्रत्यायनं भवति । अस्मिन्नर्थ–प्रत्यायने वेदाङ्गेषु निरुक्तमेव स्वार्थं साधयति । ब्रह्मणो निश्वसिते वेदे समग्रज्ञानं सन्निहितमतो अर्थज्ञानं विनैव वेदस्याध्ययनं कथं ज्ञान साधकमिति विचारणीयम् । यतो हि अर्थ ज्ञानं विना वेदस्याध्ययनं ज्ञानाय यज्ञाय वा निरर्थक मितिप्रोक्तं महर्षिणा यास्काचार्येण——

"स्थाणुरयं भारहारः किलाऽभूदधीत्य
वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा ॥"
"यद् गृहीतमविज्ञानं निगदेनैव शब्द्यते,
अनग्नाविव शुष्कैंधो न तज्ज्वलति कर्हिचित् ॥"
॥ निरुक्त १।६ ॥

एवं संसिद्ध्यते यद् वेदाङ्गेषु निरुक्तस्य अति महत्व-पूर्णं स्थानं विद्यते । निरुक्तादृते वेदानामध्ययनं ज्ञानं वा असम्भवमिति दिक् ।

# रुद्रयामलतन्त्रोपोद्धातः

## श्रीमन्तः एच० एन् चन्द्रशेखरस्वामिनः

तन्त्र शब्दस्य नैके अर्थाः प्रथिताः । परा–पश्यन्ती–मध्यमा बैरीखवत् वेदसम्मतं तन्त्रसाहित्यमपि महर्षिभिराविष्कृतम् । तन्त्रं प्रयुज्यते व्यापकेऽर्थे । क्वचित् तन्त्रागमयोः शब्दयोः प्रयोगः समानेष्वर्थेषु समुपलभ्यते । तद्यथा ——कामिकागम तन्त्रान्तरपटले——

"तनोति विपुलानर्थान् तन्त्रमन्त्र-समन्वितान् ।
त्राणं च कुरुते यस्मात्, तन्त्रमित्यभिधीयते ॥"

आगमतन्त्रयोरेकत्वम् इष्टदेवतोपासनावान्तरभेद सत्त्वेऽपि तयोर्द्वयं मोक्षाधिगतिरेवेति ध्रुवम् । सन्तियद्यपि

शाक्त-शैव-वैष्णव-पाशुपत-कापालिक प्रभृतयः पार्थक्यप्रथाः तथापि विश्वसिसृक्षालक्षणात् स्पन्दात् परम् यत् सृज्यमानं प्रपञ्चात्मकम् अखिलात्मकं तननमेव तन्त्रम् । महामहामहेश्वराचार्यैरभिनवगुप्तशुभाभिधेयैः महर्षिभिः तन्त्रस्य त्रिधा भेदप्रथाऽङ्गीकृता । तद्यथा–

"तन्त्रं जज्ञे रुद्रशिव भैरवाख्यमिदं त्रिधा" वस्तुतो हि त्रिविधैवेयं ज्ञानसत्ता विजृम्भते" भेदेन भेदाभेदेन तथैवाभेदभागिना"[1] इत्यादि । तत्र भैरवतत्त्वमभेद प्रतीकम् । रुद्रतत्त्वम् भेदाभेदप्रतीकम् तथा शिवतत्त्वं भेदप्रतीकमिति । इत्थं भैरवरुद्र–शिवाख्याद्वैत–द्वैताद्वैत–द्वैत भेद क्रमेण तन्त्राणां विश्रुतं वाङ्मयं समुपलभ्यते । श्रीकण्ठसंहितोद्धरणपूर्वकम् राजानकेन जयरथेन चतुष्षष्टितंन्त्र–भेदाः समुपवर्णिताः । तत्र दश शैवागमानां अष्टादश रुद्रतन्त्राणा चतुष्षष्टि भैरव तंत्राणां समुल्लेखोऽप्यकारि तेन ।

अपरमप्येकं मतम् दृश्यतेऽस्मिन् विषयेपरात्रिंशिकायाम्

"गुरु शिष्यपदेस्थित्वा स्वयं देवः सदाशिवः ।

पूर्वोत्तरपदैर्वाक्यै स्तन्त्रं समवतारयन् ॥" अर्थात्

स्वातन्त्र्य–शक्तिसम्पन्नेन क्रीडाविजिगीषादिदिव्यतया विभूषितेनदेवेन सदाशिवेन पूर्वोत्तर–पक्षं प्रतिष्ठापनपूर्वकम् तन्त्रस्यावतारणा कृता तत्र चतुःषष्टि तन्त्राणां विष्णु-रथ-अश्वक्रान्तादि भेदेन विभक्तं तन्त्रशास्त्रं मनीषिभिःप्रसारितम् ।

चतुष्षष्टि तन्त्रेषु रुद्रयामलस्योल्लेखः वर्त्तते । लक्ष्मीधरेणाचार्यैणापि चतुःषष्टितन्त्राणां समुल्लेखे अस्य रुद्रयामलस्य गणना कृता[2] । इत्थमेव गणना वामकेश्वरीतन्त्र-सेतुबन्ध–कुलचूडामणिप्रभृतिषु समानरूपेण कृता वर्त्तते ।

चतुःषष्टितन्त्रेषु यामलाष्टकवर्णनं क्रियते । ते–ब्रह्म' यामलम्, विष्णुयामलम्, रुद्रयामलम् लक्ष्मीयामलम्, उमा यामलम्, स्कन्दयामलम् गणेशयामलम्, जयद्रथयामलम् इति वसुसंख्याकानि सन्ति ।

राजानक–जयरथेन तंत्रालोकस्य प्रथमाह्निकोक्तायां अष्टादशकारिकायाः भाष्ये वस्वष्टकतंन्त्रक्रमेण चतुःषष्टि-तन्त्राणामुल्लेखः भिन्नप्रकारेणैव कृतः । यामलाष्टकेऽपि रुद्रयामलस्य समुल्लेखः प्रमाणतयाऽकारि । यामलाष्टके येषां यामलानां वर्णनं वर्त्तते तेषां नामानि–ब्रह्मयामलम्, विष्णुयामलं, स्वच्छन्दयामलम्, रुरुयामलम्, अथर्वणयामलम्, रुद्रयामलं, वेतालयामलञ्च सन्ति । अस्मिन् यामलाष्टके यानि यामलानि सन्ति तानि लक्ष्मीधराद्याचार्यैः सम्प्रोक्तैः यामलैः भिन्नानि किन्तु रुद्रयामलं द्वयोः समानरूपेणोपवर्णितं वर्त्तते । अतएव प्रतीयते यदिदं यामलम् सर्वप्रचलितम् सर्व समर्थितम् इति ।

चतुःषष्टितन्त्रानुसारम् यामलाष्टकविवरणम्––

( १ ) ब्रह्मयामलम्––अस्मिन् यामले स्वरसरणिः समुपवर्णिता वक्तुं शक्यते–स्वरशास्त्रमिदं, मात्रास्वरचक्रम्, वर्ण स्वरचक्रम्, जीवस्वरचक्रम्, राशिस्वरचक्रम्, भेदनस्वरचक्रम् इत्यादयः विषयास्तत्र विवृताः ।

सम्प्रति समुपलब्धे हस्तलिखितसंस्करण ग्रन्थे[3] केवलं द्वादशसहस्र श्लोका एव समुपलभ्यन्ते !

( २ ) विष्णुयामलम्–ज्योत्स्नाभाष्यसंवलितः हस्तलिखितः ग्रन्थः समुपलब्धः वर्त्तते[4] ।

( ३ ) रुद्रयामलम् । अस्मिन्नेव विषये तु बहु वक्तव्यम् ।

(४) लक्ष्मीयामलम्–स्वतंत्रग्रन्थरूपेण नास्योपलब्धिः । अन्येषु यामलेषु दीयमानेषूदाहरणेषु मात्रं नामोल्लेखः।

(५) उमायामले तु मात्रं परमशिवसहस्रस्तोत्रमुपलभ्यते[5] ।

---

१––तं०, आ० १ पृ-४५ २––आर्थर एवेलेन ( तंत्राभिधान भूमिका ) ३––चतुः शती––

४––नेपालदरबारग्रन्थालये ( तन्त्रसाहित्य पृ०५२६ ) ५––तन्त्रसाहित्य० ६०० ६–– ,, ,, पृ०२

(६) स्कन्दयामलेन नाम्ना नहि कश्चिद् ग्रन्थः उपलभ्यते किन्तु रघुनन्दननामकेन लेखकेन स्वलेखे अस्य-यामलस्य चर्चाक्रियते तथा प्राणतोषणमिश्रेण प्राणतोषिणीसंग्रहेऽपि स्कन्दयामलस्य चर्चा कृता वर्त्तते ।

(७) गणेशयामलम्—यामलाष्टकेषु एकं यामलम् । अत्रापि प्रश्नोत्तररूपेण सृष्ट्यादिवर्णनं कृतमस्ति ।

(८) जयद्रथ यामलम्—यामलेऽस्मिन् ब्रह्मयामलवत् चतुर्णां पीठानां वर्णनं भवति । षट्त्रिंशाध्ये विद्यापीठ तंत्राणां नामानि लिखितानि वर्त्तते । यथा—सर्ववीरसमायोगः, सिद्धयोगेश्वरीमतम्, पञ्चामृतम्, विश्वाद्यम्, योगिनी जालशम्बरम्, विद्याभेदाः शिरश्छेद महासंमोहनादीनि । अत्रग्रन्थे यामलष्टकोल्लेखः अपि वर्त्तते । तद्यथा—ब्रह्म, विष्णु-स्कन्दगौतमीय— रुद्र हरियामलानि ।

एवमेवान्येषामपि यामलग्रन्थानां नामानि विभिन्नेषु ग्रन्थेषु समुपलभ्यन्ते । तथा—ग्रह [अ] यामलम्, गौरी [ब] यामलम् कृष्ण [स] यामलम्, काली [द] यामलम्, चन्द्र [य] यामलम् इत्यादीनि[1]

ब्रह्मयामलस्य ऊनविंशाध्याये स्रोतोभेदाः अपि विवृताः वर्त्तन्ते । ते दक्षिण—वामोदर्ध्व भेद भिन्नाः भवन्ति । एतदतिरिक्तं विद्वद्भिः भैरवस्रोतसोऽपि विवरणं प्राप्यते । भैरवस्रोतसः चतुः षष्टितंत्राणामाविर्भावं केचिद् विद्वान्सः मन्यते । पीठानुसारं तन्त्राणां वर्गीकरणमपि क्रियते । तद्यथा—विद्यापीठम्, मुद्रापीठम्, मण्डलपीठम् इति मन्त्र-पीठम् इति चत्वारि पीठानि ! विद्यापीठेऽपि अष्टौ भैरवाः अष्ट यामलानि च सन्ति ! तानि यामलानिरुद्र, स्कन्द, ब्रह्म, विष्णु, कुबेर, इन्द्र, यम, वायु नामभिः ख्यातानि ।[2]

आम्नायभेदेनापि तन्त्राणां वर्गीकरणम् निःश्वासतन्त्रे पञ्चसूत्राणां वर्णनप्रसङ्गे रुद्रागमस्यापि चर्चा कृता वर्त्तते । अस्य उल्लेखः उत्तर सूत्रे वर्त्तते । उत्तर सूत्रम् पञ्चसूत्रेषु प्रधानं सूत्रमस्ति !

सम्मोहनतंत्रस्य षष्ठेऽध्याये सौर—गाणपत्यादिभेदेन तन्त्रादीनां यद्विवरणं प्रस्तुतं तत्र यामलग्रन्थानामपि विवरणं दत्तम् । शैवे भेदे द्वे यामले, वैष्णवे एकम् यामलम्, गाणपत्ये सौरे च क्रमशः द्वे द्वे यामले ।

एतैः विवरणैः यामलाष्टकान्तर्गतवर्णिताभिः संख्याभिः पार्थक्यं प्रतीयते किन्तु सर्वत्र रुद्रयामलस्य गणना सामान्य-रूपेण कृता वर्त्तते ।

रुद्रयामलस्य विद्यापीठे प्रथमतः वर्णनमस्ति । ब्रह्म-यामले तु दक्षिण-वाम-मध्य स्रोतसामप्युल्लेखः वर्त्तते । एतेषु स्रोतःसु त्रिशैवधारारूपेषु शंकरमुखोद्भूतानां सिद्धान्तानां वर्णनं क्रियते । तत्र भैरव—स्रोतसोऽपि वर्णनमस्ति । एतदतिरिक्तं पीठानुसारी तन्त्रभेदोऽपि समुपलभ्यते ।

रुद्रयामलस्य हस्तलिखितानां पाण्डुलिपीनां वर्णनम्—

( १ ) भैरव-भैरवी ( उमामहेश्वर ) संवाद—रूपेण, अनुत्तरउत्तरतंत्रभेदाभ्यां विभक्तोयं पाण्डुलिपि—विभाग-द्वयमलंकुरुते । द्वयोः विभागयो मिलित्वा चतुःपञ्चाशत पटलानि सन्ति ।[3]

( २ ) भैरव-भैरवी-संवादरूपं प्रश्नोत्तर-क्रमेण ग्रथित-मिदं श्री-विष्णु-शक्ति-ब्रह्मयामलोत्तरकाण्डरूपम् यामलम् ।[4]

( ३ ) भैरव भैरवी संवादरूपमिदं रुद्रयामलं ३—पटलेषु लिपिबद्धम् ।[5]

( ४ ) इदं चतुःषष्टि पटलेषुपूर्णतां भजते । अत्रापि आनन्दभैरवानन्द भैरव्योः संवादक्रमः गृहीतः वर्त्तते । अस्मिन्यामले प्रतिपादिताः विषयाः सन्तिः—१ यामलशब्द-

१— अ० पृ० १६५ ब पृ—१६६, स० पृ० १५३, द० पृ० १२७, य-पृष्ठ १२५ २ तं० सा० भू० पृष्ठ २३

३—बं० ए० सोसाइटी ५८६२,५८६३ ४—नेपाल दरबार पु २/२—२४६ छ ५—हरी ,, ,, ,,

स्योत्पत्तिः, २–तन्त्रमाहात्म्यनिरूपणम्, ३–भावशब्दय निर्वचनम्, ४–दिव्य वीरपशु भावानां विवरणम् ।[१]

( ५ ) महादेव पार्वती संवादरूपा लिपिः । अत्र गायत्री महाचक्रस्य प्रतिपादनमस्ति ।[२]

( ६ ) भैरव-भैरव संवादरूपेयं लिपिः । अस्याम् ६०°° श्लोकाः सन्ति । ६७ पटलानिचसन्ति । मुख्या प्रतिपादितः विषयाः सन्तिः—सिद्धप्रकरणम् महागुरु प्रकरणम्, चक्रानुष्ठानप्रकरणम्, कुमार्य्युपचर्या, विन्यास-प्रकरणम् कुमार—पूजन-निरूपणम्, कुमारीकवचम्, अष्टोत्तर शतकुमारिका नाम सहस्रनाम च, पशुभावः, आज्ञा चक्रम् । संगतिसिद्धान्त प्रकरणम्, आज्ञाचक्रसारसंकेतक-थनम् नक्षत्रफलाफलकथनम्, वेदप्रकरणम्, वेदभाषापरि-च्छेदे त्यादयः ।[३]

( ७ ) कौलिक तंत्ररूपेणास्योल्लेखः । प्रायशोऽत्र समग्राणां शाक्तसिद्धान्तानां, ज्ञान-धार्मिक सामाजिकाचार-विचारणां तीर्थोत्सवव्रतानां वर्णनमस्ति ।[४]

( ८ ) + ( ६ —जम्मूकश्मीर महाराजस्यस्वकीये पुस्तकालये तथा रघुनाथ मन्दिर पुस्तकालये च रुद्रयामलस्य हस्तलिखिते समुपलभ्येते द्वे लिपी ।[५]

( १० –संस्कृत विश्वविद्यालये वाराणस्यां ( क ) ( ख ) ( ग ) तिस्रः पाण्डुलिपयः विराजन्ते । तत्र ( क ) पाण्डु लिपि रसार्णवविकल्पकथनपर्यन्तम् पूर्णा । किन्तु (ख) ( ग ) प्रतौ अपूर्णे । 'क' लिपौ श्लोक सं० १००० । 'ख' लिपौ ७५० 'ग' लिप्यां १४० श्लोकाः । 'ख' 'ग' प्रत्न-लिखितौ ग्रन्थौ अपूर्णौ ।

सौन्दर्यलहरी-लक्ष्मीधरी टीकायां, कुलप्रदीपे, तारा-रहस्यवृत्तौ, ताराभक्तिसुधारार्णवे, आगमतत्त्वविलासे, सर्वोल्लासे कालिकासपर्याविधौ, तत्त्वबोधिन्यां, कृष्णानन्द-कृततन्त्रसारे रुद्रयामलस्योल्लेखः वर्त्तते ।

यामलोद्भव :—

सर्वोल्लास तन्त्रे यामलानाम् समुद्भवः समुपवर्णितः वर्त्तते । तदनुसारम् वासुदेव गणेशकथाप्रसङ्गेन विभिन्नानां निगमागमानां निर्गमः निश्चितः दृश्यते । तत्रैवेदमपि लिखित-मस्ति यत् निगमात् आगमानामुत्पत्तिः, आगमाच्चयाम-लानामुत्पत्तिः जाता ।[६]

परमाम्बायाः परायाः श्रियः मुखाम्भोजात् यामल—किंजल्कजन्म इति रुद्रयामलस्य मतम्[७]

यामलनिर्वचनम्—

यमलस्य भावः यामलम्—युगनद्धभाववत्त्वम् । यम-रूपस्य, यमलरूपस्य, युग्मरूपस्य, मिथः मिलितरूपस्य, परस्परं सम्मिश्रितस्वरूपस्य, परिचिन्तम् मननं स्वानुभूति भव्यभावनम् यामलस्य निश्च्योतार्थत्वम् । एतादृशमर्थगर्भं शास्त्रम् यामलशास्त्रम् । शास्त्रेषु सर्वत्र मनीषैव अनुशास्यते । यामलेऽपि शिवशक्तिसामरस्य रहस्ये मनीषा प्रतिष्ठाप्यते ।

महामहामाहेश्वराचार्येणाभिनवगुप्तपादमहोदयेन—लिखितम् यत् "यामलम् संघट्टः । निर्विभागप्रश्नोत्तररूप-स्वरूपप्रसरादारभ्य यावद्बहिरहन्तापरिगणनीयसृष्टि संहार-शतभासनं यत्रान्तः, तदेतदकुलोपसंहतमेव इति"[८] ।

वस्तुतः एकैव परा कालस्य कर्षिणी शक्तिशक्तिमद्भे-दयोगेन यामलत्वं प्रपद्यते[९] । प्रकाशविमर्शलक्षणमौपाधिकं भेदमवभास्य यामलतामेति । यामलस्य प्रत्यवमर्शो परिपूर्णोऽ हमात्मकः परमशिवः प्रद्योत्यते[१०] ।

१—नोटला आफ २—ट्रि० के० १००७ ( ख ) ३—राजेन्द्रलाल मिश्र पुस्तकालय २९२
४—बीकानेरपु० १३०६ ५–ज० का० १७७५, र० मं० ४६५० ५ —सर्वोल्लासतंत्रे ( उल्लास १ पृ. ३ )
६—रुद्रयामलोत्तरतंत्रे पृ–१ ७—परात्रिंशिका पृ १७८ ८—तंत्रालोक आ० ३ श्लोक २३४
९— ,, ,, ३ श्लोक २३५

# वृथा—जीवनम्

डॉ० वासुदेव कृष्ण चतुर्वेदी

'वृथागतं तस्य नरस्य जीवनम्' इति समस्यां स्वीकृत्य सन्दब्धानीमानि पद्यानि श्रीमतां वासुदेव-कृष्ण चतुर्वेद-महाभागानां समुद्बोधकानि युगानुकूलानि मातृकामहनीयानि भावकुसुमानि। सानुकम्पं प्रेषितानि विशेषतः सूर्योदयायेति कृतज्ञता विज्ञाप्यते। [ सं० ]

न येन विद्याऽधिगता यशस्विनी न येन वृत्तिर्विहिता मनस्विनी
न येन बुद्धिः सुधृता तरस्विनी वृथा गतं तस्य नरस्य जीवनम् ॥१॥

न येन विद्यालय-मध्यवर्तिनी विलोकिता पुण्य-धरा तपस्विनी
न पुस्तकागारमहोविलोकितं वृथा गतं तस्य नरस्य जीवनम् ॥२॥

न येन विद्यालय मानकं धृत स्वमण्डले कीर्तिरहो न रक्षिता
सुकन्दुकैः क्रीडनकैः प्रधावनै-र्वृथा गतं तस्य नरस्य जीवनम् ॥३॥

कृता न यात्रा वन-पर्वतादिषु प्रवासिभिश्चापि कृता न मित्रता
न मार्जिताः स्थान गता कुरीतयो वृथा गतं तस्य नरस्य जीवनम् ॥४॥

न येन विद्यावरदायका बुधाः सुपूजिता ज्ञानरतास्तपस्विनः
न छात्रवृन्दस्य कृतं हितं महद् वृथा गतं तस्य नरस्य जीवनम् ॥५॥

न छात्रसङ्घेऽधिगतं परं पदं न नाट्यमञ्चेऽथनिजाक्षरंश्रुतम्।
न सैनिकानामिव वेषकं धृतं वृथागतं तस्य नरस्य जीवनम् ॥६॥

कृता न शास्त्रार्थ महोत्सवे मतिः सुवंजन्तीग्रहणे न वा रतिः
न तालिकाभिश्च धृता वचस्तती वृथागतं तस्य नरस्य जीवनम् ॥७॥

न येन विद्यार्थिकुलं निषेवितं न वार्जितं तत्र यशः प्रतिष्ठितम्
न वा गुरूणाममलं व्रतं धृतं वृथागतं तस्य नरस्य जीवनम् ॥८॥

—०✽०—

पञ्जीकृत-संख्या—एल० आर० एन०/१०२

# सूर्योदयस्य नियमाः

पत्र संहिता—

१—'सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकदशकं वर्तते। धनादेश-( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पो० पी० द्वारा प्रेषणे ३।०० पृथक् प्रदेयानि स्युः।

२—आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनप्रथमाङ्कतः ( जनवरी अंकतः ) एव ग्राहकत्वं स्वीक्रियते। माध्यमिकेन केनापि अंकेन न स्वीक्रियते।

३—आंग्लमासस्य २६ तमे दिनांके 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४—लेख-कवितादीनां भाषया संयतया, सरलया शुद्धया च भाव्यम्। प्रकाशनीयलेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एवं लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५—सम्पादकीय-विषयसम्बन्धे पत्रव्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय पत्रव्यवहारे च व्यवस्थापकः इति च स्पष्टं लेखनीयम् येन उत्तरलाभे मुधा विलम्वो न भवेत्।

विज्ञापनशुल्कम्—

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष सौविध्याय पत्रव्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठम् | १००) | साधारणस्य प्रत्यर्धपृष्ठम् | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण-तृतीयपृष्ठस्य | १५०) | प्रथमद्वितीयावरणपृष्ठयोः विज्ञापनं न स्वीक्रियते। | |

– सङ्केतः –

**'सूर्योदयः'–कार्यालयः, भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी–१**

सम्पादकः, प्रकाशकः, मुद्रकश्च-डॉ० श्री परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम् लहुराबीर, वाराणसी—२२१००१

मुद्रण-स्थलम्—हनुमान मुद्रण यन्त्र,
पियरी कलाँ, वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य
मासिकं संस्कृतमुखपत्रम्

[ ५८ तमे वर्षे ] ❀ वाराणसी ❀ मार्च १९८१ चैत्रिकः २०३७-३८ ❀ [ अङ्कः—३

❀

जयतु सुरभारती

❀

वार्षिकं मूल्यम्

दशरूप्यकाणि

१० / ००

❀

प्रत्येकस्याङ्कस्य

एक रूप्यकमात्रम्

१/००

❀

आजीवन शुल्कम्

शतं रूप्यकाणि

१००/००

सम्पादकः—

डॉ० परमहंस मिश्रः


## ❀ आराधय हृदयेशम् ❀

आराधय हृदयेशं, सहृदय !

आराधय हृदयेशम् !

प्रसरति परितः पारमेश्वरः

परमः प्रियः प्रकाशः ।

स्वात्मन्येव सर्वतः विलसति

वन्द्यः विश्व-विकासः ।

विमृश शाश्वतम् सकलं सम्यक्

वितरति तृप्ति-विशेषम्, सहृदय ...

आराधय हृदयेशम् ।

स्वात्मसुधा—संप्लवसमरसता—

रसिकः सकलं क्लेशम् ।

शमयति, परामर्शमधुमधुरः

पश्यति शिवतामविशेषम् !

आलोचय चिन्मयतां, चिन्तय,

वैश्वात्म्यैकमशेषम् । सहृदय...

आराधय हृदयेशम् !

रचयिता— डॉ० परमहंस मिश्रः

# विषय-सूची



---

# मुकुन्दस्तवशतकम्


त्रिपाठियमुनेशः "चातकः"


नलोकेभ्यः सर्वं परमकृपया तौ वितरतः श्रुतौ गीतौ भक्तैः कर-किसलयौ साधुसुषमौ ।
तदामह्यं दातुं शरणमपि शश्वच्चरणयो रभावःकोवाऽस्ते कथमनघ दृष्टः खलुमया ? ॥१६॥

इमे आत्मारामा विषयविमुखायोगविधिभिः त्वया सार्धं रंतुं सततमभिलाषं नवनवम् !
समीहन्ते कान्त ! व्रजशशि मुखीनां यदि न किं स्पृहा मे योग्या ते पदकमल रेणौ विलसितुम् ?॥१७॥

शिशुत्वं वा बालकिसलयिततारुण्यमिह वा सुधासिन्धौ सर्वं तव तरलकारुण्य कलितम् ।
अतोऽहं तं मन्ये मनुजमतिदुर्दैवनिहतं न यो स्थानं पानं सततमधिगन्तुं स्पृहयते ॥१८॥

विना मेघं वृष्टिः भवति न यथा सृष्टि सुखदा विना वृष्टि लोके भवति न यथा सात्त्विकसुखम् ।
तथैवास्मिन्देहे नवघननिभं गोकुलपतिम् विनाऽमन्दानन्दः स्फुरति न कदापि हुलसितम् ॥१९॥

विरामः जीवानां श्रुत इह न कुत्रापि भुवने सदातेषां भ्रान्तिः भवति सफला बन्धनविधौ ।
विचित्रं किन्त्वेवं कथितमृषिभिः श्रोत्रसुखदं गते गोपीनाथं भवति विकृतेः कारणलयः ॥२०॥

विकुण्ठे वैकुण्ठः वसति सह लक्ष्म्या निशिदिनं हिमाद्रौ कामारिः चरति कठिनं शान्तिदतपः ।
कथं मे पीडाया त्वरित शमने तौ स्तुति गतौ समर्थौ गोपेश प्रकटिततनुं त्वामिह बिना ॥२१॥

क्षरन्ती या नित्यं मधुमृदुसुधां शान्तिसुखदां पृथिव्यां भक्तानां हृदयगहनेऽद्यापि रमते ।
सदा श्रोतुं द्रष्टुं श्रवणनयने तां प्रभवताम शुभा सा लीला मे हृदयनिहिता नाथ भवतात् ॥२२॥

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५८ तमे वर्षे ] वाराणसी * मार्च १९८१ * फाल्गुनिकः २०३७ * [ अङ्कः-३

## * यज्ञेन यज्ञमयजन्त देवाः *

यत्पुरुषेण हविषा देवा यज्ञमतन्वत।
वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः॥
सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृता।
देवा यद्यज्ञं तन्वाना अबध्नन् पुरुषं पशुन्॥
यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्याः सन्ति देवाः॥

शुक्ल य० पुरुष सूक्त--१४--१६

देवा एव सृष्टिकर्त्तारः। अनुत्पन्नेषु बाह्यद्रव्येषु पुरुषस्वरूपमेव मनसा हविष्ट्वेन संकल्प्य तेनैव मानसिकेन हविषा ते मानसं यज्ञं संव्यदधुः। तस्मिन् मानसिके यज्ञे वसततुः आज्यत्वेन समुपयोजितः। समिद्धे ग्रीष्मेन्धने विशेषतः ते शरदृतुमपि हविश्चक्रुः।

आधिदैविक्यां सृष्टिप्रक्रियायां विराट् पुरुष एव पशुत्वेन स्वीकृतः। विराजः पुरुषस्य पशुत्वेन भाविते यज्ञः अतन्यत। तदानीं गायत्र्यादीनि सप्त छन्दांसि परिधयः आसन्। द्वादशमासाः, पञ्चर्त्तवः, त्रय इमे लोकाः आदित्यश्च एते त्रिगुणाःसप्त अर्थात् एकविंशतिसंख्याकाश्च इन्धनत्वेन भाविताः।

प्रजापतिप्राणप्रतीकाः अमृतान्धसः देवा मानसेन संकल्पयज्ञेन यज्ञरूपं प्रजापतिमपूपुजन्। एवंभूतानि जगद्धारकाणि प्रथमानि धर्मतत्त्वान्यासन्। यस्मिन् वैराज्ये पुरातनाः देवा आसन्, तत्रैव महात्मानः समुपासकाः अपि गच्छन्ति। वैराज्य सम्प्रदात्रीयं प्रथमधर्मरूपा यज्ञमयी सृष्टिसरणिरिति भावः।

[ पूर्वतोऽनुवृत्ता

# 卐 श्री शक्तिगीता 卐

भगवत्पूज्यपादाः महर्षयः स्वामिनः ज्ञानानन्दगुरुवर्याः

[ शक्ति-शक्तिमतोरभेदयोगवर्णनम् ]

तदाहमेव भूत्वा वै पुरुषो बीजदस्तथा ।
प्रकृतिः क्षेत्ररूपाऽस्मि कार्यब्रह्मणि भासिता ॥८५॥

कार्यब्रह्मस्वरूपेऽत्र विश्वस्मिन् जङ्गमे मम ।
वर्त्तते चिद्विलासस्तु स्थावरे सद्विलासिता ॥८६॥

ममानन्दविलासोऽसौ व्याप्नुवन् सच्चिदन्तरम् ।
ममैव परमानन्दसत्तां समनुभावयेत् ॥८७॥

अहमेवास्मि भो देवाः सर्वेषामीश्वरी परा ।
उत्पद्यन्ते त्रिभावाश्च त्रिगुणा मत्त एव हि ॥८८॥

सृष्टि-स्थिति-लयांश्चैव त्रिगुणैरहमेव वै ।
करोमि सततं देवाः जगतां नात्र संशय ॥८९॥

मय्येवानुभवस्तेषां त्रिभावैर्भवति ध्रुवम् ।
नाना ब्रह्माण्डसङ्घं हि स्वगर्भे चाहमेव तम् ॥९०॥

सन्धार्य सततं देवाः, देश-काल-स्वरूपतः ।
अनाद्यनन्तसत्तायाः कारयेऽनुभवं खलु ॥९१॥

ब्रह्माण्डानान्तु सर्वेषां प्रत्येकं प्रभवस्थिती ।
विधातुं प्रलयश्चापि जनये निजगर्भतः ॥९२॥

ब्रह्म-विष्णु-महेशाख्याँस्त्रीन् देवाननेकशः ।
ब्राह्मीं च वैष्णवीं रौद्रीं स्वांशरूपां सुरर्षभाः ॥९३॥

एता अनेकशस्तिस्रः शक्तीस्तेभ्यो वितीर्य वै ।
ब्रह्माण्ड-सङ्घ-प्रत्येक-सृष्टि-स्थिति-लयक्रियाः ॥९४॥

त्रिभिर्देवैर्यथातथ्यं साधयामि यथाक्रमम् ।
यूयं सर्वे च भो देवा भावमाश्रित्य मामकम् ॥९५॥

आधिदैवमजायन्ताऽऽध्यात्मिकं च महर्षयः ।
आधिभौतिकमाश्रित्य पितरश्चापि जज्ञिरे ॥९६॥

[ क्रमशः

सम्पादकीयम् —

# आजादश्चन्द्रशेखरः

( १ )

माता भूमिः पुत्रोऽहं पृथिव्याः इति श्रुतिसिद्धान्तः। तत्रापि यस्मिन् देशे जन्म अस्माकम्, यस्य भूमिभागस्य भौतिकीं भव्यतां बिभ्रत् भ्राजते शरीरमिदं, यत्रत्यं संविदात्मकम् पुण्यं वरेण्यं च प्राणतत्त्वं संप्रीणयन् श्वसित्यखिलं प्राणिवर्गः तत्रत्यं ध्रुवमेव ऋणं भवति–सर्वेषां प्रणिनामुपरि। ऋणस्यापनोदनं सर्वेषां कर्त्तव्यं भवति। शास्त्रेऽपि देवर्षिपितृसम्बन्धिनाम् ऋणानामपनोदताय देवार्चनम्; श्रुतिस्वाध्यायः गार्हस्थ्येन सन्ततिसन्तानप्रवर्त्तनादिकं कर्म सर्वैः समाचरणीयमेवेति समुपदिष्टम्।

देशस्यापि ऋणं निश्चप्रचमपाकरणीयं देशवासिभिरिति कृषकाः श्रमेण कृषिकर्मणा अन्नानि समुत्पाद्य समाजं पालयन्ति! एवमेव सर्वे नागरिकाः स्वकर्मभिः देशस्योत्कर्षं साधयन्तः सानन्दं श्वसन्तीति स्वाभाविकी प्रवृत्तिः। एवमेव देशस्योपरि वैदेशिकेनाक्रमणेन यद्ऋणं भवति तस्मात् प्राणपणेन रक्षन्ति–सीमा रक्षकाः योद्धारः प्रहरिणः।

एवमेव यदा देशः परतन्त्रः भवति–तदा जागरूकाः देशभक्ताः स्वातन्त्र्यसमुपलब्धये सर्वथा प्राणार्पणेनापि प्रयतन्ते। देशोऽयं पुरा परतन्त्र आसीत्। दूरदेशात् सप्तदीपान्तरालात् वाणिज्यार्थं समागताः छद्मदुरभिसन्धिसन्धानदक्षाः आंग्लदेशीयाः जाल्माः स्वर्ण–विहग इति विश्वविश्रुतं देशं पारतन्त्र्यविपदां पारावारे समपातयन्। पराधीनतामसहमानैः वीरैः भारतीयैः भृशं भूरितया प्रायत्यत। मातृभूमेः पारतन्त्र्यार्गलां महाकालेन लवित्रेणोल्लवितुं लक्षाधिकाः पुरुषार्थपरायणाः पुरुषाः कारावासमवृण्वन्! केचिदन्ये शूलमपि स्वीचक्रुः, जनताः जागरूकाश्च जागरूकजातकाः आंग्लानीकाभि लूनकन्धराः स्वस्यैव शतघ्नी समाघातेनात्मनः ससूर्यभेदं प्राणदानेन मातृपदारविन्देषु समर्पयन्।

संस्कृत स्वाध्यायसमर्पितजीवनेषु वाराणसेयेषु विद्यार्थिषु वरेण्यः आसीत् पञ्चाशत्-वर्ष-पूर्वम् एकः अन्तेवासी, नाम्ना चन्द्रशेखरः बैजनत्था-बीथिका विहारी वीरवरः। संस्कृतं पठन्नेव तस्य मनसि समुन्मुद्रिता स्वातन्त्र्यमनस्विता। तरस्विना तेन चिन्तितं आंग्लचौरमारीचप्रपञ्चः। निश्चितं तेन देव्याः स्वतन्त्रतायाः समाह्वानाय। क्रान्तिकारिणां क्रान्तदर्शिनां पुरोहितः सः स्वकीयेन संघटनसामर्थ्येण योजितवान् महाप्राणानां धीरधौरेयाणां प्राणार्पणाय च कृतपणानां देशभक्तानां चैतन्यवतां यूनां दर्पदम्भोलिभीमं दन्डधरंदलम्। निर्मलेन मातृभूमिस्नेहेन ओतं प्रोतं चासीत् समग्रं यस्य जीवनम्–तमेवाद्य सगर्वं वयं स्मरामहे।

ऐतिहासिकस्य काकोरी–अभियानस्य–लाहौरादिहृदय द्रावकघटनाचक्रस्य, सांडर्सहत्याकांडस्य, मनमाडबमकाण्डस्य, प्रतापगढ़े द्वारकापुराभियानस्य, गाढोदियान्दोलनस्य च प्रणेता, महाप्राणवान् वीराग्रणीश्चन्द्रशेखरः एव एक एतादृशः क्रान्तिकारिणां शिरोमणिरासीत् यस्य महाभियानैः आंग्लशासकानां रूढमूलं शासनं मूलादेव प्रकम्पितम्! वक्तुं शक्यते यत् महात्मनां गान्धिनामान्दोलनात् प्रागेव आंग्लशासकानां पादतलात् भारतधरित्री स्खलितेवासीत्।

क्रान्तिकारिणामान्दोलनस्य प्रणेतुः प्रतिज्ञा आसीत्न-कदापि चन्द्रशेखरः वैदेशिकानां बन्धने आबद्धः भविष्यति। एतां प्रतिज्ञां पूरयन् निर्बन्धः सः ग्वालियर ओरछा–झाँसी-कानपुर–हमीरपुर–वाराणसी सहितविविधस्थानेषु छद्मवेषेण

वसन् जाल्मान् शासकान् लौहचणं चर्वयितुं विवशम-कार्षीत् । ध्रुवमेवेदं यत् यदि रामप्रसादबिस्मिलः, राजेन्द्र-नाथलाहिडी, अशफाकुल्ला रोशनः भगवर्तसहादयः वीराः शूलं न अवरिष्यन्, सुभाषचन्द्रेण च 'त्वं लोहितं देहि-अहं स्वातन्त्र्यं दास्यामी' ति डिन्डिमघोषं नाकरिष्यन् तदा शतं वर्षाणि यावत् भारतं पारतन्त्र्य एव जटितमविष्यत् नास्त्यत्र संशीतिलेशः !

जीवनस्य अन्तिमे क्षणे द्वितीया प्रतिज्ञा तेन पूरिता । २७ फरवरी १९३१ दिनाङ्के स्वकीये बलिदानदिवसे आंग्ल-नृशंसः जाल्मः नटबावरः प्रयागे अल्फ्रेड पार्कोद्याने संयोगात् परिक्रामन्तं चन्द्रशेखरं लक्ष्यं निर्धार्य गोलिकया तं जङ्घाप्रदेशे विद्धं चकार । विभीषणं विशेषरसिंहं कातरं नटबावरं च चन्द्रशेखरोऽपि गोलिकाग्रासं चकार । रक्ताक्तकलेवरेण वीर-वरेण स्वकीयायां कर्णपुटिकायां स्वमाउजरेऽवशिष्ट गोलिका प्रायुज्यत । एवं तस्य वीरस्य बलिदानं पापिनां विद्वेषिणां वैदेशिकानां प्रहारेण नाभूत् ! ३२ मिनटपर्यन्तं शतमितैः क्लीबांग्लसेविभिः सह संहर्षरतः साहससम्पन्नः निर्भीकः संस्कृतज्ञः स्वातन्त्र्यसेनानी चन्द्रशेखरः ब्रह्मसारूप्यमवाप ।

२७ फरवरी १९८१ दिवसे तस्यार्धशताब्दबलिनिर्वाण-दिवसे प्रयागे समग्रदेशतः समागतानां स्वातन्त्र्यसेनानीनां समारोहः समभवत् । एकः संस्कृतसाहित्याध्येता स्वतंत्रता-संग्रामस्येतिहासे स्वकीयं नाम स्वर्णाक्षरैः समलेखयत् इति सर्वेषां संस्कृताध्येतॄणां कृते गर्वस्य विषयः । सूर्योदयस्य परिवारोऽपि तस्मै सुमनोऽञ्जलिं सश्रद्धं समर्पयति ! भारतस्य भविष्यदुत्कर्षार्थञ्च स्वात्मानं संयोजयितुं शिव-संकल्पं करोतीति शम् ।

## सं० संस्कृत-विश्वविद्यालये परीक्षावरोधः—

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः सम्प्रति विषमाति-विषम-समस्याभिः ग्रस्तः अकाण्डताण्डवविडंम्बनाभिश्च संकटापन्नः मन्ये कष्टेन श्वसिति ! केन पवित्रेण संकल्पेन सम्पूर्णानन्दः राजकीयं संस्कृतमहाविद्यालयं विश्वविद्यालयं चकार ! संस्कृतसेविनां शुभार्यातं संविधातुम्, अतिशयमुप-कर्तुम् अर्थाभावग्रस्तनामपाकर्तुम् समाजे स्तरीयां प्रतिष्ठां सम्प्रदातुं सः निश्चिकाय विश्वविद्यालयार्थम् । संकल्पश्च समर्थतया पूरयाञ्चकार । एतस्मादध्येके महत्तमाः मान्याः महनीयाः कुलपतयः कुलाधिपत्यमलञ्चक्रुः क्रमशोऽग्रं सुरगवी-गौरवास्पदं पदं प्राप्य अराजत-विजयवैजयन्तीं च विहायसि व्यस्फारयत् । आसीदयं सन्तोषस्य विषयः संस्कृताध्येतॄणां कृते;

सम्प्रति कुलपतिपदमलं कुर्वन्ति बदरीनाथशुभाभिधेयाः संस्कृत मनीषिणां वरेण्याः । येऽप्येतादृशं पदमलंकुर्वन्ति ते निश्चयम् असिधारंपन्थानं पद्भ्यां क्रामन्ति, लौहचणस्य चर्वणं कुर्वन्ति, ध्रुवम् अप्रत्याशितमेव आशशासिषन्ते । पूर्वनिवर्त्तमानानां कुलपतीनां कृतिम्, उत्तरदायित्वं भविष्य-त्समुन्नतिं च सुविचार्य स्वीकृतेयं पदवी स्वनामधन्यैः विद्वद्भिः सम्पूर्णानन्दविश्वविद्यालयस्य कुलपतिपरम्परायां विद्यावतां वरिष्ठा इमे अनुपमेयतामेव भजन्ते । प्रारम्भतः अद्यावधि लौहपुरुषैरेभिः विरोधिनां विषमाः वाक्वज्रप्रहाराः अभ्यनन्द्यन्त । विविधाभिः दुरभिसन्धिभिः भीष्मप्रतिज्ञा इमे प्रातार्यन्त, अनेकैः छात्राध्यापकप्राध्यापक-कर्मचारि-समस्याभिरिमे प्रभाविता अभवन् किन्तु एतेषां कार्यपद्धतौ साहसे वा न किंचित् शैथिल्यं समापतत् ।

सत्यमिदं यत् संघर्षपरिवेशे अध्ययनाध्यापनं न सुष्ठु चलितुं शक्यते, इदमपि सत्यं यत् संघर्षेणानेन विश्व-विद्यालयस्य गरिमा गारल्यगलितः विगलितगौरवास्पद-तामेव प्रपेदे । इदमपि निश्चितं यत् मुण्डे मुण्डे मति-वैभिन्न्यं भवत्येव येन मिथः विसंवादितापि समापतति किन्तु एकम् अदूष्यवैदुष्यविभूषितं सुपुरुषं सुपदवीकं लक्ष्यं विधाय एतादृशी शरप्रहारप्रक्रिया संस्कृतज्ञानामितिहासे अभूतपूर्वा अप्रत्याशिता चैवेति वक्तुं शक्यते ।

पुस्तकालयः मुद्रापितः नियुक्तयः अवरुद्धाः, कुलपतिः अपमानितः सर्वमेतत्संस्कृतज्ञानां चाक्षुषप्रत्यक्षस्य विषयः। किन्तु सम्प्रति अयं गण्डस्योपरि स्फोट एव विडम्बितः यत् शासनेन परीक्षापि स्थगिता। विस्मयावहमिदं यत्, नहि सप्ताहात् पूर्वं शासनस्य मतिरजायत, अपितु तस्मिन् क्षणे यदा प्रायः लक्षमात्र-द्रव्यव्ययेन प्रश्नपत्राणि मुद्रापितानि-वितरितानि--कापिकादि व्यवस्था जाता-तदा एतत् दुष्कर्म कृतं शासकैः। आसेतुहिमाचलं संस्कृतं जगत् आश्चर्यचकितं जातमेतेन विवेकरहितेन कर्मणा। कदादेशाप्रापणात् केषुचित् लक्ष्मणपुरादिषु केन्द्रेषु त्रयाणां चतुर्णांपत्राणां परीक्षापि सम्पन्ना। तेषां का गतिः भविष्यति ?

न केवलं संस्कृतज्ञानामियं क्षतिः, अपितु राष्ट्रस्य लक्षाधिका क्षतिः। इदं राष्ट्रद्रोहवत् कर्म, सहस्राधिकेषु केन्द्रेषु सहस्राधिकाः परीक्षेच्छुकाः छात्राः तत्र गतवन्तः, नैराश्येण च प्रत्यावर्तिताः। तेषामपूरणीया क्षतिः केन पूरणीया भविष्यति ? सत्रावसानं च दूषितमनेन कदादेशेण।

प्रधानमन्त्रिणं, प्रान्तीयमुख्यमन्त्रिणं च पृच्छति सूर्योदयः कोऽस्ति उत्तरदायी एतस्य दुष्कर्मणः ? अनुचितमेतदाचरितं सर्वथा। अवश्यमेव स प्रष्टव्यः प्रतिकर्त्तव्यश्चेति शम् !

# तन्त्रालोकः

श्रीमन्महामहेश्वराचार्याभिनवगुप्तपादविरचितः पूर्वतोऽनुवृत्तः

[ जयरथकृतविवेकाभिख्यव्याख्योपेतः ]

यदुक्तमनेनैव

'भट्टं भट्टारिकानाथं श्रीकण्ठं दृष्टभैरवम्।
भूतिकलाश्रिया युक्तं नृसिंहं वीरमुत्कटम्॥
नानाभिधानमाद्यन्तं वन्दे शंभुं महागुरुम्।'

इति।

'स्त्रीमुखे निक्षिपेत्प्राज्ञः स्त्रीमुखाद्ग्राहयेत्पुनः।'
इत्याद्युक्तेः कुलप्रक्रियायां दूतीमुखेनैव शिष्यस्य ज्ञानप्रतिपादनाम्नायात् इह गुरुतद्दूत्योः समस्कन्धतया उपादानम्॥ १६॥

ननु सामान्येन त्रिकदर्शनप्रक्रियाकरणं प्रतिज्ञाय, संभवत्यपि तदर्थाभिधायिनि शास्त्रजाते किमिति श्री मालिनिविजयोत्तरमेवाधिकृत्य तन्निर्वाहयिष्यते इत्याशङ्क्याह—

न तदस्तीह यन्न श्री-मालिनीविजयोत्तरे।
देवदेन निर्दिष्टं स्वशब्देनाथ लिङ्गतः॥१७॥

'श्रीमालिनीविजयोत्तरे' इति नादि-फान्ताया मालिन्या 'विजयेन' सर्वोत्कर्षेण उत्तरति सर्वस्रोतोभ्यः प्लवते, सारभूतत्वात्सर्वशास्त्राणाम्॥१७॥

एतदेवाह—

दशाष्टदशवस्वष्टभिन्नं यच्छासनं विभोः।
तत्सारं त्रिकशास्त्रं हि तत्सारं मालिनीमतम्॥१८॥

इह खलु परपरामर्शसारबोधात्मिकायां परस्यां वाचि सर्वभावनिर्भरत्वात्सर्वं शास्त्रं परबोधात्मकतयैव उज्जृम्भमाणं सत्, पश्यन्तीदशायां वाच्यवाचकविभागस्वभावत्वेन असाधारणतया अहंप्रत्यवमर्शात्मा अन्तरुदेति, अतएव हि तत्र प्रत्यवमर्शकेन प्रमात्रा परामृश्यमानो वाच्योऽर्थोऽहन्ताच्छादित एव स्फुरति, तदनु तदेव मध्यमाभूमिकायामन्तरेव वेद्यवेदकप्रपञ्चोदयाद्भिन्नवाच्यवाचकस्वभावतया उल्लसति। तत्र हि परमेश्वर एव चिदानन्देच्छाज्ञानक्रियात्मकवक्त्र पञ्चकासूत्रणेन सदाशिवेश्वरदशामधिशयानस्तद्वक्त्रपञ्चकमेलनया पञ्चस्रोतोमयम् अभेद-भेदभेदशोट्टङ्कनेन तत्तद्भेदप्रभेदवैचित्र्यात्म निखिलं शास्त्रमवतारयति, यद्वहिर्वैखरीदशायां स्फुटतामियात् । तथाहि—प्रथममीशानतत्पुरुषसद्योजातैरेकैकस्य उद्भूतबुभुभिः सद्भिर्भेदत्रानुल्लसितम् उद्भूतैश्च—इत्येकैकभेदाः षट्, त्रिभिरप्येभिः संभूय उल्लासित एको भेदः, ईश-तत्पुरुषौ ईश-सद्योजातौ सद्योजात-तत्पुरुषौ इति द्व्यात्मना संभूयापि एभिः त्रिभिर्भेदत्रयं समुल्लासितम् इत्येते भेदप्रधाना दश शिवभेदाः तदुक्तम्—

> 'ईश— तत्पुरुषाजातैरुद्भूतैरुद्बुभूषुभिः ।
> एककैः षड्भिरेकेन त्रिकेण द्व्यात्मकैस्त्रिभिः ।।
> तदित्थं शिवभेदानां दशानामभवत्स्थितिः ।'

इति। एषामेव च वामदेवाघोरमेलनया अष्टादश रुद्रभेदा भवन्ति । तथा च तत्रैककेन वामदेवाघोरात्मभेदेन भेदद्वयमेव, पञ्चविधत्वेऽपि ईशादेर्वक्त्रत्रयस्य शिवभेदेषु उक्तत्वात् उक्तस्य च पुनर्वचनानुपपत्तेः, तथा द्व्यात्मकत्वेन भेदत्रयस्य, तेन पञ्चानां त्र्यात्मकत्वेन भेदत्रयस्य शिवभेदेषु उक्तत्वात् । तत्पुरुष-सद्योजातयोस्तु एवं स्वभावाभावात्, ताभ्यां सह असङ्गतेर्भेदचतुष्टयाभावादीशवामौ, ईशाघोरौ, अघोर-वामौ—इति द्व्यात्मकं भेदत्रयमेव अवशिष्यत—इति त्रयो द्विकभेदाः । तथा पञ्चानामपि ईश-तत्पुरुषाजातवामाघोराणां त्र्यात्मकत्वेन संमीलनायामीशानस्य क्रमेण इतरवक्त्रसंभेदे षट्, तत्पुरुषस्य त्रयः, तथा सद्योजातस्य तदवशिष्टवक्त्रसंभेदेऽपि एक एव—इति दशविधत्वेऽपि ईश-तत्पुष-सद्योजातात्मनः प्रथमत्रिकस्य शिवभेदेषु उक्तत्वात् ईश-वामाघोरात्मनः शिष्टस्य त्रिकस्य व्यापारान्तरेण नियोक्ष्यमाणत्वाच्च त्र्यात्मकभेदाष्टकमेवावशिष्यते—इत्यष्टावेव त्रिकभेदाः । अत एव एककथनं चिन्त्यमिति न वाच्यम्,—तत्पुरुषसद्योजात-वामाघोराणां हि द्व्यात्मकतया चतुरात्मकतया वा ज्ञानजनने संयोगनिषेधो विवक्षितः, त्र्यात्मकतायामपि तथाभावे हि बहूनां भेदानां निषेधः प्रसज्यते— इति भेदसप्तककथनमपि न्याय्यं न स्यात्—इत्यलं बहुना । तथा पञ्चानामप्येषां चतुरात्मकत्वेन संमीलनायां पञ्चविधत्वेऽपि नराजातवामाघोराणामुक्तयुक्त्या संगत्यभावाच्चत्वारश्चतुर्भेदाः, सर्वेषामप्येषां संमीलनायां पञ्चकभेद एक एव—इत्येवम् 'अष्टादश' भेदाभेदप्रधाना रुद्रभेदाः । तदुक्तं

> 'यदा त्रयाणां वक्त्राणां वामदक्षिणसंगतिः ।
> तदा सप्तद्विकभेदा अष्टौ चैव त्रिकात्मकाः ।।
> चतुष्काश्चापि चत्वारः पञ्चकस्त्वेकरूपकः ।
> इति विंशतिमध्यात्तु नराजातावसंगतिम् ।।
> वामाघोरद्वये यातः स्वातन्त्र्यात्पूर्वपश्चिमौ ।
> ज्ञानं भजेते नैवेति भेदषोडशकं स्थितम् ।।
> तत्रापि वामदेवीयमेकं तदुपरि स्थितम् ।
> स्वरूपं भैरवीयं च तेनाष्टादशधा स्थितिः ।।
> रुद्रभेदस्य शास्त्रेषु शिवेनैवं निरूपिता ।'

इति। एतच्च श्रीश्रीकण्ठ्यामभिधानपूर्वं विस्तरश उक्तं, तद्यथा

> 'स्रोतस्यूर्ध्वे भवेज्ज्ञानं शिवरुद्राभिधं द्विधा ।
> कामजं योगजं चिन्त्यं मौकुटं चांशुमत्पुनः ।।
> दीप्त ·· ·········· ······ न्तरं पुनः ।
> शिवभेदाः समाख्याता रुद्रभेदांस्त्विमाञ्छृणु ।।

द्विजयं चैव निःश्वासं मद्गीतं पारमेश्वरम् ।
मुखबिम्बं च सिद्धं च सन्तानं नरसिंहकम् ।।
चन्द्रांशुं त्रीभद्रं च आग्नेयं च स्वयम्भुवम् ।
विसरं रौरवाः पञ्च विमलं किरणं तथा ।।
ललितं सौरभेयं च तन्त्राण्याहुर्महेश्वरि ।
अष्टाविंशतिरित्येवमूर्ध्वस्रोतोविनिर्गताः ।।

अत्र चानेनैव

'............ शिवैरुक्तः शिवाभिधः ।
भेदो रुद्रैश्च रुद्राख्य इति भेदो निरूपितः ।।

'वसुभिः' अष्टभिर्गुणिता 'अष्टौ' चतुःषष्टिर्भैरवभेदाः । तथा च अद्वयस्वभावे स्वरूपे शिवशक्तितत्संघट्टाख्ययोगिनीवक्त्रात्मनि दक्षिणवक्त्रे प्रत्येकमुद्बुभूषूद्भूत-तिरोधित्सु-तिरोहितात्मकतया चतूरूपत्वेन भेदषोडशात्मभितरद्वक्त्रचतुष्टयं यदा युगपदमन्तर्लीनतामेति तदैषां परस्परमेलनया चतुःषष्टि-रद्वयप्रधाना भैरवभेदाः ।

तदुक्तं

'यच्चान्ते दक्षिणं हार्दं लिङ्गं हृत्परमं मतम् ।
तदप्यन्तः कृताशेषस्प [सृ]ष्टभावसुनिर्भरम् ।।
सर्वसंहारकत्वाच्च कृष्णं तिमिररूपधृत् ।
भेदभावकमायीयतेजोंऽशग्रसनात्मकम् ।।
तत्रान्तर्लीनतां याति यावद्वक्त्रचतुष्टयम् ।
उद्बुभूषु तथोद्भूतं तिरोधित्सु तिरोहितम् ।।
इत्थं युगपदेवैतद्भेद-षोडशकात्मकम् ।
दक्षे वैसर्गिके हार्दे स्वतन्त्रेऽथ शिवे विशत् ।।
अष्टाष्टकात्म तच्छास्त्रं युगपद्भैरवाभिधम् ।'

इति । एतच्च श्रीश्रीकण्ठयामभिधानपूर्वं विस्तरत उक्तम् । तद्यथा

'अन्यत्संक्षेपतो वक्ष्ये गीतं यत्परमेष्ठिना ।
तच्च भेदैः प्रवक्ष्यामि चतुःषष्टि विभागशः ।।
भैरवं यामलं चैव मताख्यं मङ्गलं तथा ।
चक्राष्टकं शिखाष्टकं बहुरूपं च सप्तमम् ।।
वागीशं चाष्टमं प्रोक्तमित्यष्टौ वीरवन्दिते ।
एतत्सादाशिवं चक्रं कथयामि समासतः ।।
स्वच्छन्दो भैरवश्चण्डः क्रोध उन्मत्तभैरवः ।
असिताङ्गो महोच्छुष्मः कपालीशस्तथैव च ।।
एते स्वच्छन्दरूपास्तु बहुरूपेण भासिताः ।
ब्रह्मयामलमित्युक्तं विष्णुयामलकं तथा ।।
स्वच्छन्दश्च रुरुश्चैव षष्ठं चाथर्वणं स्मृतम् ।
सप्तमं रुद्रमित्युक्तं वेतालं चाष्टमं स्मृतम् ।।
अतः परं महादेवि मतभेदाञ्छृणुष्व मे ।
रक्ताख्यं लम्पटाख्यं च मतं लक्ष्म्यास्तथैव च ।।
पञ्चमं चालिका चैव पिङ्गलाद्यं च षष्ठकम् ।
उत्फुल्लकं मतं चान्यद्विश्वाद्यं चाष्टमं स्मृतम् ।।
चण्डभेदाः स्मृता ह्येते भैरवे वीरवन्दिते ।
भैरवी प्रथमा प्रोक्ता पिचुतन्त्रसमुद्भवा ।।
सा द्विधा भेदतः ख्याता तृतीया तत उच्यते ।
ब्राह्मी कला चतुर्थी तु विजयाख्या च पञ्चमी ।।
चन्द्राख्या चैव षष्ठी तु मङ्गला सर्वमङ्गला ।
एष मङ्गलभेदोऽयं क्रोधेशेन तु भाषितः ।।
प्रथमं मन्त्रचक्रं तु वर्णचक्रं द्वितीयकम् ।
तृतीयं शक्तिचक्रं तु कलाचक्रं चतुर्थकम् ।।
पञ्चमं बिन्दुचक्रं तु षष्ठं वै नादसंज्ञकम् ।
सप्तमं गुह्यचक्रं च खचक्रं चाष्टमं स्मृतम् ।।
एष वै चक्रभेदोऽयमसिताङ्गेन भाषितः ।
अन्धकं रुरुभेदं च अजाख्यं मूलसंज्ञकम् ।।
वर्णभण्ठं विडङ्गं च ज्वालिनं मातृरोदनम् ।
कीर्त्तिताः परमेशेन रुरुणा परमेश्वरि ।।
भैरवी चित्रिका चैव हंसाख्या च कदम्बिका ।
हृल्लेखा चन्द्रलेखा च विद्युल्लेखा च विद्युमान् ।।

एते वागीशभेदास्तु कपालीशेन भाषिताः ।
भैरवी तु शिखा प्रोक्ता वीणा चैव द्वितीयिका ॥
वीणामणिस्तृतीया तु संमोहं तु चतुर्थकम् ।
पञ्चमं डामरं नाम षष्ठं चैवाप्यथर्वकम् ॥
कबन्धं सप्तमं ख्यातं शिरच्छेदोऽष्टमः स्मृतः ।
एते देवि शिखाभेदा उन्मत्तेन च भाषिताः ॥
एतत्सादाशिवं चक्रमष्टाष्टकविभेदतः ॥'

इति । तैर्भिन्नं भेदोपभेदवैचित्र्यात्मना नानाप्रकारमित्यर्थः । यत्तु श्रीश्रीकण्ठ्यां तत्पुरुषवक्त्रमुद्दिश्य

'अष्टाविंशतिभेदैस्तु गारुडं हृदयं पुरा ।'

इत्यादि । तथा

'पश्चिमे भूततन्त्राणि ................ ।'

तथा

'दक्षिणे दक्षिणो मार्गश्चतुर्विंशतिभेदतः ।'

इत्यादि । तथा

'वामदेवात्तु यज्जातमन्यत्तत्साम्[म्प्र]तं शृणु ।'

इत्यादि अन्यभेदोपभेदवैचित्र्यमुक्तं, तदेकैकस्म वक्त्रस्य पञ्चवक्त्रात्मकत्वात् एतद्भेदजातोपभेदात्मकमेव—इति तत एव संगृहीतम् इति न पृथगिह आयस्तम् । तदुक्तं—

'एकैकं पञ्चवक्त्रं च वक्त्रं यस्मात्प्रगीयते ।
दशाष्टादशभेदस्य ततो भेदेष्वसंख्यता ॥'

इति । अतश्च भेद-भेदाभेदाभेदप्रतिपादकं शिवरुद्रभैरवाख्यं त्रिधैवेदं शास्त्रमुद्भूतम् इति सिद्धान्तः । तदुक्तं

'तन्त्रं जज्ञे रुद्रशिवभैरवाख्यमिदं त्रिधा ।
वस्तुतो हि त्रिधैवेयं ज्ञानसत्ता विजृम्भते ॥
भेदेन भेदाभेदेन तथैवाभेदभागिना ।'

इति । एवं च भेदाद्यात्मकमपीदं शास्त्रं परमेश्वरेशवामाघोरात्मकं षष्ठं त्रिकं परादिदेवीत्रयविश्रान्तिधामतया क्रोडीकृत्य,

'पुष्पे गन्धस्तिले तैलं देहे जीवो जले रसः ।
यथा तथैव शास्त्राणां कुलमन्तः प्रतिष्ठितम् ॥'

इत्याद्युक्त्या परमाद्वयामृतपरिप्लावितं विद्धय' अन्यथा ह्यस्य परपदप्राप्तिनिमित्तत्वं न स्यात् । तदुक्तं

'ततोऽपि संहृताशेषभावोपाधिसुनिर्भरः ।
भैरवः परमार्थोद्यद्बृंहितशक्तिकः ॥
ईशान-वाम-दक्षासु तासु शक्तित्रयं क्रमात् ।
अपरादिपराप्रान्तं क्रोडीकृत्य त्रिकं स्थितः ॥
ऊर्ध्ववामतदन्यानि तन्त्राणि च कुलानि च ।
तद्द्वाराप्रान्तरूढानि प्रापय्याभेदभूमिकाम् ॥'

इति । ननु एवंविधा श्रुतिर्न काचिदुपलभ्यत इति किं प्रमाणम् । ननु अत्र उक्तमेवानेन गुरुपारम्पर्यलक्षणं प्रमाणम् । यदाह

'इत्थं मध्ये विभिन्नं तत्त्रिकमेव तथा तथा ।
शास्त्रमस्मद्गुरुगृहे संप्रदायक्रमात्स्थितम् ॥'

इति । ननु यदेवात्र पुंबुद्धिप्रभवत्वं चोद्यं तदेवोत्तरीकृतम्—इत्यपूर्वमिदं पाण्डित्यं, तेनागमः कश्चन संवादनीयो येनैतत्समाहितं स्यात्, नैतत् अविगीतैव हि प्रसिद्धिरागमः इत्युच्यते, यदुक्तं

'प्रसिद्धिरागमो लोके युक्तिमानथवेतरः ।
विद्यायामप्यविद्यायां प्रमाणमविगानतः ॥
प्रसिद्धिरवगीता हि सत्या वागैश्वरी मता ।
तथा यत्र यथा सिद्धं तद्ग्राह्यमविशङ्कितैः ॥'

इति । सा चात्र विद्यत एवाविगानेन महात्मनां महागुरूणाम् इति किमत्र प्रमाणान्तरान्वेषणेन । यदि चावीदृशां भवादृशामेवंविधा श्रुतिः कर्णगोचरं न गता—तावतैव एतन्नोपपद्यते, इति न वक्तुं शक्यं, नहि प्रमाणाभावात्प्रमेयस्याप्यभावः स्यात् । न चैते विप्रलम्भका येनैमन्यथोपदिशेयुः, एतदुपदेशमूकतयैव निखिलस्य शैवशास्त्रागमार्थस्य प्रयोगदर्शनात् ।

[ क्रमशः

# ❀ श्री शक्तिशतकम् ❀

[ पूर्वतोऽनुवृत्तम् ]


## रचयिता—शिवजी उपाध्यायः

सं० संस्कृतविश्वविद्यालयः वाराणसी, उ० प्र०


भूयाद् भूरिसमृद्धिवृद्धिभरिता सम्पद्वृता श्रीः तथा,
भूयादुत्तरदिग्दिगीशसहितः श्रीमान्नगेशोऽच्युतः !
भूयाद भूय इव प्रभूतरचनोद्वाहादिकर्मापि ते,
भूयासुः परितोऽपि शान्तिसरितः सद्यो वहन्त्यः सदा ॥७९॥

भूयात्तेऽपि च जन्म पर्वतगृहे भूयाच्च दिव्योत्सवः,
दासस्ते किल कालिके ! कविरसौ भूयात्तव स्तावकः ।
भूयान्मातरधीश्वरि ! 'प्रतिमहाकाव्यं' न 'तत्सम्भवं',
भूयात्तेन महात्मना विरचितं तन्नामतः 'शाम्भवम्' ॥८०॥

सञ्जाते भुवि 'शाम्भवे' स गिरिजे ! नूनं कुमारो भवेत्,
नासौ तारकसंगरे क्षततनुः स्याद्वा नवीनीकृतः ।
स्याद् वा 'हारविहारभारवहनं' सम्यक् परिष्कारितं,
त्वं वा स्याः कविसन्मतेः कृतिगता लोकत्रयी नायिका ॥८१॥

दिव्यस्वर्गसमिद्धसिद्धि–सहिताः सन्तो महान्तः सुराः,
सम्भूय स्वयमेव शम्भुसदने निस्यन्दमानापगे ।
चञ्चद्वारिसुधाशिनां सुमनसां हंसादिकानां प्रिये,
रम्ये मानसरोवरे शिवधिया सिस्नासवः स्युस्समे ॥८२॥

सेयं भारतभारती पुनरिमं शङ्खध्वनिं तन्वती,
मन्वाना निजगौरवं च जगतीं कुर्यात् कनिष्ठाङ्किताम् ।
श्रौतं तत्त्वमुदेतु पूर्णमयतां लोकः सुखं सन्ततं,
भूयासुश्च शिवे समेऽपि सुधियः साम्यैकसद्दर्शिनः ॥८३॥

काशी शम्भुपुरी परेतनगरी प्रेतानपीहागतान्,
क्लिष्टान् तानपि कृष्णाकृष्णाचरितान् सत्कृत्य संतारयेत् ।
मातस्त्वं मधुरामृतोपमपयःपूरोल्लसन्निर्भर–
स्रोतस्तोमसमाप्लुतौ नवनुतौ तौ मादृशं पायय ॥८४॥

वाच्यौ चेत् कुचकौ शिशुस्तव समुत्सङ्गे स दासोऽस्मि ते,
वक्षोजौ यदि, वक्षसि प्रविहरन्नीषद्रुदन् चाऽर्भकः ।
भूयातां च यदा स्तनौ गुहगणेशादीनिमान् दूरतः,
सर्वानेव सुवञ्चितान् विदधता स्तन्यं मया पीयताम् ॥८५॥

श्रीमन्मानिनि ! मानवीतनुमिता चेत्त्वं भवेर्मत्प्रिया,
स्वीयामेव करोमि सौम्यगृहिणीं कार्येश्वरीं रक्षिणीम् ।
मन्येऽहं कुलनन्दिनीमिव मतां मान्यां च सीमन्तिनीं,
मर्यादैकरतां गृहस्थपदवीयोग्यां सुभोग्यां सखीम् ॥८६॥

जाते साधुसुते कुमारसदृशे संस्कार–संस्कारितं,
सम्यक् तं गुरुपूजनोचितमतिं ज्ञानोत्सुकं कारये ।
श्रद्धावन्तममुं विधाय विधिना वीरोत्तमं धीधनं,
सत्यप्रेमपरायणं सुरगिरा विद्वत्प्रियं धारये ॥८७॥

सर्वानन्दविधायिनं निजसुतं संवीक्ष्य काश्यामिमं,
प्राक्शिक्षाकलितं च सादरभरं जिज्ञासुमापादये ।
स्वात्मीकृत्य पुनर्गुरुं गुरुसमं 'रामाभिरामं' शिवं,
सम्प्रार्थ्य प्रणतिं विधायतनुजं पाठार्थमायोजये ॥८८॥

---

विशेषः—इतः परं देव्या अवाच्यानामपि गुह्याङ्गानां वाच्यत्वे स्वभावाभिव्यक्तिप्रकारपरिवर्णनया तस्याः सामान्य मानवीकरणेन समुचितनारी–सम्मानभावप्रकटनम् । कुलपारम्परीपरिष्कारनिदर्शनप्रख्यापनञ्च ।

हे मत्कल्पितभामिनि ! प्रणयिनि ! प्राणेश्वरि ! त्वादृशं,
विद्वन्मानसमोदकं विधुमिव श्रीमन्तमाह्लादकम् ।
शोकोद्भूततमोपहं शुभगुणं वंशावतंसं सुतं,
पित्रोः सेवकमाप्य भारतमिदं विश्वञ्च मोदायताम् ॥८९॥

कन्या चेद् भवतीव रम्यविलसत्कन्याङ्गवल्लीप्रभा,
सञ्जायेत महेशमौलिशशिनश्चान्द्रीव धन्या शुभा ।
अन्यात्वेऽपि सतीव, कृष्णकलिता मीरेव वैरागिणी,
शश्वद्वंशपरम्पराप्रणयिनी पत्युर्गृहे राजताम् ॥९०॥

श्री श्रीशङ्करसङ्गवासिनि ! महाशक्ति ! प्रचण्डारिणः—
शुम्भस्यान्तविधायिनि ! प्रशमितध्वान्ते ! महाम्बाम्बिके ! ।
सर्वं साधुतरं तदैव भविता स्याच्चेद् भवत्यः कृपा,
नो चेद् हन्त किल चन्द्रमाश्च सविता क्वास्तां न जानेतराम् ॥९१॥

एते चाणुकराक्षसानुवशगाः केचित् स्वयं भीरवः,
प्राकट्येन गभीरशान्तमतयो विज्ञानवीराधमाः ।
संघे कुत्र चिदेत्य विश्वरसिकैस्तैः शान्तिवार्ताप्रियैः,
भूयो नाणविकास्त्रनिर्मितिरिहास्तु प्रायशो भण्यते ॥९२॥

यावत्तत्र तदीयसम्भणनजः शब्दो जनैः श्रूयते,
तावत्तद्गृहदेशजैः प्रकुशलैरन्यास्त्रमुन्नीयते ।
एवं काऽपि परम्परैव सुबहोः कालाच्च तैश्चाल्यते,
सद्भिः कूटकलाप्रवीणमतिभिर्विश्वं परं पाल्यते ॥९३॥

शान्तिः शान्तिरिहास्तु वादमनिशं विस्तारयन्तोऽप्यमी'
* कृष्णो गौर इति प्रवर्णघटनामात्रेण निघ्नन्त्यहो ! ।
मातस्तद्भृशदारुणं जगति ते चीत्कारमातन्वते,
कुत्राप्यद्य कमप्यलं जनपदं द्राक् कन्दरीकुर्वते ॥९४॥

आद्ये ! शक्ति ! जगद्विनाशनपरा एते भयङ्कारकाः,
सर्वत्र प्रभविष्णवो विदधते लोकान् यथा विष्णवः ।
एते कृष्णविपद्विधानपटवः कंसायमानाः परे,
एते नैव च मानवाः प्रकुटिलान्तर्भावतो दानवाः ॥९५॥

किन्त्वेतानपि सन्मतीन् शुभगतीन् सत्यज्ञविज्ञानिनः,
कर्तुं कारयितुं च देवि ! परितस्त्वामेव याचे पुनः ।
नाहं कोऽपि न नामतोऽपि जगति स्थानं क्वचिल्लब्धवान् ।
सोऽहं केवलपुत्रकस्तव परं पीडा ममैतान् प्रति ॥९६॥

संसारक्षयकारिणः स्वयमिमे स्थास्यन्ति क्वात्मारयः,
नो जानामि तदा भवानि ! न भवान्येतन्महाश्चर्यकम् ।
रक्षैतान् गिरिजे ! पुनः पुनरपि त्वां प्रार्थये साञ्जलिः,
रक्षामाशु ममापि तेन कुरुतादम्ब त्वमाविर्भव ॥९७॥

सम्यक् साम्यमुदेतु मानवकुलं कल्याणमासाद्यतां,
विश्वं विध्वगिहोद्भवल्लयविपज्ज्वालां नचालोकताम् ।
सेयं भारतभूश्च भूसुरवरैर्विज्ञैः सदाभासतां,
दिव्यज्योतिरुपेत्य दुर्लभतरा शान्तिश्चिरं जाग्रताम् ॥९८॥

दिव्यन्तु प्रथिताम्ब ! शम्भुसहिता देवा जगन्मण्डले,
सन्त्वेताः सकलाः श्रियस्त्रिभुवनैश्वर्यप्रभाभास्वराः ।
भान्त्वेते मनुजा यथैव मनुजाः स्वेषु प्रियाः सानुजाः,
नश्यन्त्वाशु च विश्वमानवयमाकारा इवैतेऽसुराः ॥९९॥

शश्वद्भारतवासिनोऽत्र मिलिताः सौहार्दसंस्कारिताः,
कौटिल्यं किल शास्त्रमात्रलिखितं जानन्त्वमी धीधनाः ।
देवान् भावयता जनेन विबुधाकारेण देदीप्यतां,
राष्ट्रं नाम गृहं यथा मतिमतां सञ्जायतां श्रीमताम् ॥१००॥

* विशेषः—योरोपीयदेशेषु ब्रिटेनामेरिकाप्रभृतिषु गौरकृष्णवर्णविवादमादाय परस्परं कलहायमानानां मानवद्वेषिणां कौटिल्याविष्करणम् ।

सद्योऽन्योन्यमुपेत्य नीतिनिपुणा राष्ट्रैकरक्षाव्रताः,
सन्तः सन्त इवात्र सन्तु भुवने लोकानुकूलं सराः ।
सर्वत्रास्तु च साधुशीलजनतातन्त्रात्मकं शासनं,
स्यादेतन्निरपेक्षकं परमिदं स्यात् स्नेहसापेक्षकम् ।।१०१।।

सर्वे सन्तु जगद्विधान-कुशला विश्वार्थनिर्देशकाः,
सर्वे सर्वसमर्थनाय किमपि ज्योतिर्दधत्वात्मनि ।
सर्वे सर्वनिदर्शनानि परितः स्नेहान्विताःस्युस्समाः,
छात्राश्छात्रधिया गुरुर्गुरुधिया शास्त्राणि पान्तुस्वयम्।।१०२।।

सद्यो भारतमातुरत्र जगतीयं भारतीयश्रिया,
शान्तिक्षान्तिसुखानुकूलविलसत्कान्तिप्रिया राजताम् ।
नद्यः साधु वहन्तु तेऽपि गिरयो भूमीमिमां बिभ्रतु,
नन्दानन्तशिरस्स्थितश्च सुचिरं राष्ट्रध्वजो भ्राजताम्।।१०३।।

प्राच्यामुद्गतभानुमानपरतः शान्तः प्रतीच्यां शशी,
दृष्ट्वैकैकमुदेति चास्तमयते दृश्यप्रभोऽस्तप्रभः ।
दृष्टान्तं भुवि भारतेऽत्रमनुजः स्वस्मिंश्चरित्रे क्रियात्,
येनैकेन परस्य हानिरतुला न स्यादिति प्रार्थये ।।१०४।।

कालश्चायुषि नात्मनि प्रभवतान्नाशो मले नामले,
वासोऽयं निलये निजे भवतु नान्यस्मिन् बलात् स्वीकृते ।
दासो राष्ट्रमहात्मनोऽस्तु भरतप्रायो नरो नात्मनः,
सर्वस्सर्वसुखे सुखी परतया दुःखे च दुःखी भवेत् ।।१०५।।

धर्मो राष्ट्रियको जयत्वनुदिनं धर्मेतरन्नश्यतु,
कल्याणं जगतोऽस्तु सन्तु सुखिनः सर्वेऽप्यमी प्राणिनः
गावः सन्तु च कामधेनु--सदृशः सम्मानिताः पूजिता,
अद्योच्चारितमन्त्रवद् गुरुगिरां ध्वानः समुज्जृम्भताम्।।१०६।।

## याचना

श्यामे! सुभाषिणि हिमालयजे! ऽनघे हे-.
पञ्चाननासननिवासिनि ! चारुशीले!।
भक्तार्तिहारिणि! सिताम्बरधारिणि त्वं,
तद् देहि यत्तव सुतोऽहमथानुयाचे ।।१०७।।

याचे शिवे न गजवाजिनरेन्द्रराज्यं,
प्राज्यं धनं न खलु तत्पुरुषार्थलभ्यम् ।
विद्याविलासिनि दयां यदि मे हि दद्याल्-,
लप्स्येऽहमाशु जननि! स्वयमत्र सर्वम् ।।१०८।।

पुत्रा भवेयुरघराशिखलीकृताश्चेन् ,
मातस्तथापि नहि ते समुपेक्षणीयाः ।
नत्वं दयामयि! ददासि दयां तु मे किं,
निन्दा तवैव भुवनेऽपि भविष्यतीति ।।१०९।।

अस्मात्परा न किल काऽपि कृपामयीह,
स्वान्तस्स्थले वससि वेत्सि मनोविकल्पम् ।
आकर्ण्य वर्ण-विकलार्भक वाक्प्रणालीं,
तत्त्वं कलेवरवरे! कुरु रोचते यत् ।।११०।।

जननि! तव जनोऽयं साम्प्रतं सीदतीत्थं,
वितर तरलिताक्षि! त्वं सदाऽस्मै दयाम्बु ।
शशि शकलकिरीटे! शुम्भमुख्यासुराघ्नि!,
कलय विकलमेनं पुत्रमाशु प्रसीद ।।१११।।

तुहिनगिरिसुकन्ये! ते सुकंजायमान-
पद-युग-मकरन्द-स्वादमास्वाद्यमानः ।
प्रमुदितमनसं स्वं पुत्रकं मां द्विरेफं'
सपदि शरणदे! हे चण्डिके! रक्ष रक्ष ।।११२।।

सुरमुनिगुरुदेवास्त्वां सदा संस्मरन्ति,
हतविधिमनुजास्ते केचिदन्ये हसन्ति।
परमिह जननि! त्वं स्वात्मकर्मानुरूपं,
भुवि निखिलजनेभ्यः सत्फलं देहि मातः ॥११४॥

'श्रीशक्तिशतकं' शक्तं संसारत्राणकारकम्।
सज्जनामृतसर्वस्वं सुहृच्चित्तानुरञ्जकम् ॥११४॥
अम्बिके! त्वं परा शक्तिः सर्वशक्तिसमन्विता।
आत्मशक्तिहतप्रायं विश्वं रक्ष महेश्वरि! ॥११५॥

इति श्री शक्तिशतकं शुभं भूयात्

# अग्निसोमात्मकं जगत्

श्री देवेन्द्रनाथपाण्डेयः वेदाचार्यः
अनुसन्धाता, सं० सं० वि० वि० वाराणसी

यद्यपि वैज्ञानिकैः आधुनिक-दार्शनिक-विचारकैस्च अनेकानि कारणानि संसारस्य सर्जने स्वीक्रियन्ते, परन्त्वयं विषयोनैवोपेक्षणीयः! संसारस्य अग्निसोम-पदार्थ-द्वयमूलत्वम्। तत्राग्निः दाहतापप्रकाशप्रतीकः सोमश्च ओजसः बलस्य च प्रतीकः। षड्भावविकासाः भवन्तीति सर्वेषां षण्णां भावविकाराणामाधारतत्वं सोमांशरूपमेवेति-कथने नैव दोषः। कथं चेदुच्यते-रस पदार्थे ऊर्जाशक्तिः, तत्कारणादेव कस्यचिद् जैविकवस्तुनो उत्पत्तिः। तदनन्तरं तथैव अन्येविकाराश्च भवन्ति। यथा भावविकारः क्रिया-विकारश्चति।

क्रियाश्चाऽत्र अवस्थापरिणामः। कस्यचिद्वस्तुनः उत्पत्तौ अग्निः सहायकः कवोष्णत्वात्। उदाहरणं यथा क्षेत्रे बीजमुप्यते, यदि क्षेत्रेसमोष्णता न स्याच्चेदतिशयशीतत्वान्नैव बीजानि समुन्मिषन्ति। अतोऽत्राग्निप्रभावत्वं स्वीकरणीयमेव!

भौतिक-वैज्ञानिकैः संसारस्य सृष्टौ आधारद्वयमेव स्वीक्रियते-तच्चद्वयम्-(१) इलेक्ट्रान (२) प्रोटानश्चेति। तत्त्वद्वयमग्निसोमात्मकमेव। एलाक्ट्रान पदार्थः स्थिरः अपरश्च चलायमानः तस्यप्रदक्षिणां करोति। एतेन तुल्यमेव-प्रकरणं शतपथ-ब्राह्मणे दृश्यते। वैदिकसाहित्येतिहासे श्री बलरामोपाध्यायैर्लिख्यते यत् यजुः इति पदार्थे यत् + जूः इति पदार्थद्वयमस्ति। "जूः" निरन्तरं चलायमानः पदार्थः यत्इति स्थिरः अनेनैवपदार्थद्वयेन संसारस्य सर्वेषांपदार्थानामुत्पत्तिरिति[१]।

इदमभिलक्ष्यैवोक्तं —"अग्नौप्रस्ताहुतिस्सम्यगादित्यमुपतिष्ठते-आदित्याज्जायतेवृष्टिः यतोऽन्नं ततः प्रजा" इत्य-

१ वै० सा० इति० बलराम उपाध्याय पे० १८

त्रापि अग्नि–सोमयोःसाहचर्यं दृश्यते । "-अग्निः अग्रणी-र्भवति" अग्रं नमति वा" इति यास्कः । अवलोकनीयं यद् वर्षारूपं तत्त्वं तत् सोमांशः, आहुतिभस्मीकरणम् अग्नेः कार्यम् रसशोषणं च तस्यैवं गुणधर्मत्वात् । अन्तरिक्षे च धूमरूपेण हुतस्यांशस्य नयनम् अग्निज्वालावेगस्य कार्यम् । मानवशरीरेऽपि अग्निसोमयोरेव प्राधान्यं दृश्यते ।

शरीरे यथा-दाह–ताप–प्रकाशात्मकधर्मः आग्नेयः । रुधिरवीर्यमज्जा-तरलपदार्थाः सौम्याः । अस्थिपञ्जरस्यभ शुष्कत्वादाग्नेयमेव कल्पनीयम् । उदरेऽपि जठराग्निः इत्यत्राग्नेरंशत्वं, नेत्रे, कान्तौ च तथैव । अनेनैव प्रकारेण सर्वत्रैव जैविक--पदार्थेषु कल्पनीयम् । वैज्ञानिकैरपि परीक्षणीयोऽयं विषयः वेदस्य ।

शतपथब्राह्मणेऽपि परोक्षरूपेण आदित्यस्य भोजनरूपे-सोमरूपस्य चन्द्रमसः उल्लेखो वर्त्तते ! तथा चोक्तं, "अग्नि सोमयोर्हवैतावती विभूतिः प्रजातिः" सूर्यऽएवाऽऽग्नेयचन्द्रमाः सौम्याऽहरेवाऽऽग्नेयं रात्रिसोम्म्या इति । ब्रह्मणो च सूर्यचन्द्रमसोरपि अग्निसोमस्वरूपत्वमेव साधितम् ! सूर्य-प्रधानत्वाद्दाहतापप्रकाशत्वाच्च दिवसस्य अग्निरूपत्वम् । शीतप्रधानत्वादप्रकाशत्वाच्चरात्रेः सोमत्वमिति ! शास्त्रेषु च तथ्यमिदं स्वीकृतं यत् नेत्रयोः स्वात्मीयो प्रकाशो न भवति । उदाहरणमपि प्रत्यक्षमेव यत् रात्रौ न कश्चित् पदार्थः स्पष्टतरः प्रतीयते । बाह्यप्रकाशापेक्षितत्वात् । अपरं च यत्-नेत्रयोः प्रायशः तरलपदार्थाः एव दृश्यते, तरलत्वस्यैवाधि-क्यात् !

गीतायामपि उक्तं भगवता "अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणनापान समायुक्तः पचाम्यन्नं चतुर्विधम्" अत्र विश्लेषणीयोऽयं विषयः यत्, यदुक्तं प्राणादिकं तत् अग्नितत्वम् । तस्यैव भाषान्तरे एलाक्ट्रान-शब्दः अर्थात् प्राण्यग्नि-तत्त्वमपि, वैद्युतं तत्वम्[१] । "सोमो-भूत्वारसात्मकः" इत्यत्रापि सोमतत्वस्य पोषकत्वं रसात्म-कत्वमुक्तं भगवता । श्रुतिरपि वक्ति अमावास्याप्रकरणे– "एषवैसोमोराजा देवानामन्नं यच्चन्द्रमा स य एषएतां रात्रिं न पुरस्तान्नपश्चाद्दृशे तदिम लोकमागच्छति सऽइष्टे-वाऽऽश्चौषधीश्च प्रविशति स वै देवानां वस्वन्नं ह्येषां तद्यदेषु एतां रात्रिमिहाऽमा व्वसति तस्माद् अमावास्यानाम[२] अतो हेतो "अर्थवत् परिमाणम्" इति न्यायेन अत्र सोम-प्रकरणमेव लक्ष्यम् । अस्य रसस्य यत् सर्वासु वनस्पतीषु रसात्मकं तत्वं सोमतत्वरूपमेव राजते । तस्मात् राजासोमः सर्वौषधीषु प्रविष्टत्वात् वनस्पतिभ्यश्च पशवः प्राप्नुवन्ति । एवञ्च पोषिताः पालिताः गवादयः पशवः दुग्धरूपेण तं पदार्थम् अस्मभ्य प्रयच्छन्ति : तेनैव पदार्थेन रोगोपशामकाः औषधपादपाश्चापि संजायन्ते !

"अप एव ससर्जादौ" इत्यत्राऽपि अप्सु यद्वेगत्वं चञ्चलत्वं च दृश्येते तदग्नेः स्वरूपम् ! भावोऽयं यत् क्व-चिद् अग्निपदार्थः सोमपदार्थे, तथा च तद्विपरीते विशिष्ट-त्वादन्तर्भूतो भवति ! अस्य प्रत्यक्षमुदाहरणं कृषिकार्येऽपि दृश्यते । अन्नेभ्यःपादपेभ्यो जलेन सह प्रकाशस्याऽपि आव-श्यकता भवति । धूमशकटोऽपि जलाग्निभ्यामेव प्रचलति । अतो हेतो अग्नि सोममयं जगदिति सिद्धमेव ।

१—उ० गी० सा० इति पे० १९

२—उ. श. ब्रा. या १—अ०६ ब्रा० ४ ख—३—१५

# वङ्गेषु गीर्वाणभाषोन्नतिः

डॉ. स. मो. अयाचितः

भारते प्रायः ख्रिस्तशकस्य प्रारम्भकालाद् एव संस्कृत-प्रचारस्थाने लोकेषु प्राकृतभाषाणाम् एव प्रभावः स्थिरीभूतः। तत्पूर्वं वृद्धकालेऽपि प्राकृतस्य लोकव्यवहारे महत्त्वपूर्णं स्थानम् आसीत्। अत एव च बौद्धैः जैनैः च प्राकृतेषु एव लोकानाम् उपदेशः कृतः। परंतु संस्कृतस्य स्थानं प्राकृतभाषाभिः लोकव्यवहारे सम्यग् गृहीतेऽपि संस्कृतस्य महत्त्वं वृद्धिं गतं दृश्यते। अतः एव संस्कृतपुराणानाम् अनुकरणेन उत्तरकालेऽपि जैनैः बौद्धैः च स्वस्वधर्मपराणाम् उपकाराय पुराणानि रचितानि, संस्कृतसाहित्याद् एवं प्रेरणां लब्ध्वा अन्यद् अपि धार्मिकं लौकिकं च साहित्यं ग्रथितम्। वङ्गेषु ख्रिस्तपूर्वे तृतीये शतके ब्राह्मीं लिपिम् उपयुज्य कस्यांचन पूर्वकालिक-आर्य-भारतीय-भाषायां लिखितः प्रस्तरः उपलभ्यते। अयमेव च वङ्गेषु न केवलं प्राकृतभाषामयः, अपि तु लेखबद्धः उपलब्धः प्रथमावतारः इति वक्तुं शक्यते। तथापि सममेव संस्कृतप्रचारः अपि वङ्गेषु न खण्डितः। वङ्गेषु पुण्ड्रवर्धनभुक्तिस्थात् अस्मात् प्राकृतलेखात् प्रभृति संस्कृत-प्राकृत-भाषाणां का स्थितिः उत्तरे काले, न तद् यथावत् ज्ञातुं प्रमाणान्तरम् अस्ति। प्रायः समुद्रगुप्तकाले तु अन्यः एव संस्कृतलेखः ब्राह्मीं लिपिम् आश्रित्य उपलभ्यते सप्तशतकेभ्यः अनन्तरं, यस्मिन् काचन गुहा चक्रधारिणं विष्णुं प्रति समर्पिता इति उद्घोषितम्। अनन्तरेषु वत्सरेषु अधिकाधिकेन प्रमाणेन संस्कृतस्य उपयोगः लेखनम् उपलभ्यते, येन संस्कृतभावः वङ्गोपरि प्राकृतभाषायाः अङ्गीकारेऽपि नैव न्यूनतां गतः इति स्पष्टं भवति। खालिंपुरस्थे धर्मपालीये ताम्रपट्टे अष्टमे शतके एव सुप्रसिद्धायाः गौडशैल्याः संस्कृतसाहित्य-शास्त्रख्यातायाः विशिष्टः प्रभावः दृग्गोचरीभवति।

प्रायः अन्यत्राऽपि भारते एतादृशी एव स्थितिः। प्राकृतभाषाणाम् उदये विकासे अपि संस्कृतप्रभावः अपि साधारणलोकव्यवहारार्थम् अपि न कदाऽपि ह्रासम् उपगतः। पण्डितानां व्यवहारे मर्यादितं सद् अपि संस्कृतं निखिल-जनतायाः हितार्थम् एव प्रायेण विनियुक्तम्, अन्यत्र ललितसाहित्यात्, इत्यत्र न विमतिः प्रकटिता अभ्यासकैः। भारतीया संस्कृतिः इति नाम्ना यः व्यवहारः भवति स बाहुल्येन संस्कृतप्रभावस्य एव द्योतकः। यदा च ब्रिटिशानाम् अत्र आगमनात् प्रभृति क्रमेण सर्वोऽपि भारतः पाश्चात्यकल्पनामयः जातः इव अदृश्यत, तदानीम् अपि मध्यकालीनसंस्कृतस्य अपेक्षया उपनिषदादेः प्राचीनसंस्कृत-साहित्यस्य एव आधारेण सुधारकैः स्थित्यन्तरं कर्तुं प्रयतितं, येन तन्मनसि अपि संस्कृतप्रभावः स्यात् इति नैव आश्चर्यकरम्। यत्र साधारणव्यवहारः एव संस्कृताश्रितः आसीत्, तत्र तदाधारेणैव पाश्चात्यसंस्कृत्या पदं कर्तुं प्रयतितं, तदाधारेणैव च विरोधः अपि कृतः स्यात् इति न विस्मयावहम्। अन्यासां भारतीयभाषाणाम् इव वङ्गभाषायाः अपि संस्कृतभाषया सह दृढः आन्तरिकः संबन्धः, किं बहुना, आर्यभारतीयाः भाषाः संस्कृतमय्यः एव इति स्थितिः। प्राकृतभाषाणां विकासेन वङ्गे अन्यत्र च व्यवहारे स्थित्यन्तरं स्यात्, संस्कृतिः तु अविचलिता संस्कृताश्रयेण दृढीभूता इति महत् कारणं भारते राष्ट्रभावना-निर्माणार्थम् ऐक्यसंवर्धनार्थञ्च।

समुद्रगुप्तस्य कालः भारतेतिहासे सर्वथा स्वर्णयुग-पदेनैव व्यवहर्तुं योग्यः इति सर्वसंमतम्। तत्काले च संस्कृतसाहित्यस्य रमणीयः उत्कर्षः अभूत्। तस्मिन् कालावधौ आनन्तरेषु शतकेषु च ताम्रलिप्त्याम् अन्यत्र च

वङ्गेषु बहूनि विद्याकेन्द्राणि प्रायः बौद्धैः निर्मितानि संचालितानि च विदेशीयैः आगन्तुकैः दृष्टानि वर्ण्यन्ते तत्र तत्र प्रवासवृत्तेषु। तदानीम् एव चन्द्रगोमिना बौद्धविदुषा पाणिनिमूलमपि स्वतन्त्रं संस्कृतव्याकरणम् उप निबद्धं लोकप्रियम् अभवत्। श्रीचन्द्रनाम्ना वङ्गभूपेन नवसंख्यानि विद्याकेन्द्राणि समतटप्रान्तेषु स्थापयित्वा तन्निर्वाहाय उपषोडशक्रोशायतः तावानेव विस्तृतः चन्द्रपुरीविषयः समर्पितः इति सिल्हेट्-मण्डले पश्चिमभागे नचिरात् प्रागेव उपलब्धात् ताम्रपट्टात् ज्ञायते। तेषु च विद्याकेन्द्रेषु चत्वारि देशान्तरीयमठसंज्ञया, अन्यानि चत्वारि च वङ्गाल-मठचतुष्टयम् इति संज्ञितानि। एषु केन्द्रेषु वेदाध्ययनं प्रवर्तितम्। अष्टौ च उपाध्यायाः तस्मिन् कर्मणि अध्यक्षतायै नियुक्ताः आसन्। नवमे च विद्याकेन्द्रे चान्द्रव्याकरणस्य अध्यापनं विशिष्य प्रचलितम् इति 'एतन्मठ-प्रतिबद्धचन्द्रव्याख्यानोपाध्यायस्य' इति पदात् लभ्यते।

ललितसाहित्ये वङ्गीयानां रुचिः प्रसिद्धा। मुहंमदीयानां भारतप्रवेशात् प्रभृति संस्कृतसाहित्यस्य ललितक्षेत्रे संकोचः शास्त्रविषये च विस्तरः जातः। संकीर्णसुभाषितानां संग्रह-द्वयस्य वङ्गेषु एतत्सहस्रकात् पूर्वमेव निर्माणात् डॉ० सुकुमार-सेन-महोदयेन अनुमितं यत् वङ्गीयानां प्रकीर्ण-काव्यलेखने एव प्राधान्येन प्रवृत्तिः आसीत् इति। तत् तु न शक्यते परीक्षितुं, महतां साहित्यग्रन्थानां वङ्गेषु समधिकप्रमाणेन उपलम्भस्य अपेक्षणात्। तथापि तदु-द्धृतेन राजशेखरवचसा तदनुमानं किंचिदिव बलं लभते इति न अपोहितुं युक्तम्—

'राजन् विज्ञापयामि त्वां परिहासजिहीर्षया।<br>
गौडः त्यजतु वा गाथाम्, अन्या वाऽस्तु सरस्वती॥'

इति राजशेखरनिर्देशेन प्राकृतभाषायाः ललित-साहित्यार्थं वङ्गीयैः संस्कृतापेक्षया अवहेलनम् अनुमीयते। डॉ० सेन-महोदयेन गीतगोविन्दसदृशे नितान्तम् अभिजात-संस्कृतकाव्ये कथंकारं प्राकृतस्याऽपि संस्कारः सहयोगः वा अनुमितः इति स एव जानाति इतिशम्।

## रशिया-भारत सम्बन्धः

रशियाधिपतिः भारतं समायातः तत् ज्ञातुं न मतीव कठिनम्। गन्धाराक्रमणेन रशियाविषये यत् जागतिकं मतं प्रतिकूलं जातं, तत्र भारतेन रशियाशासनस्य प्रत्यक्षा-प्रत्यक्षरूपेणसमर्थनं कर्तव्यम् इति तु तस्य अपेक्षितं स्यात् इति तर्कितुं सुलभम्। अन्याः च अपेक्षाः अपि साधारण-जनतया ज्ञातुं शक्येरन् यथा अत्रत्य-साम्यवादिपक्षकार्य-कर्तॄणां मार्गदर्शनं, राजकीयसमयस्य दृढवासंपादनं, सैनिकनीतिविषये विचारविनिमयः इत्यादि।

भारतीयसाम्यवादिपक्षेण रशियास्थपक्षस्य मार्गदर्शनं स्वीकर्तव्यम् इति यद्यपि भारतीयनीतेः विरुद्धम्, अराष्ट्रियं च तथापि तत्पक्षस्य इतिहासानुकूलम् एव। अतः तेन पक्षेण भारतस्य रशियानुकूलतायाः यद्यत् संपादकं तस्य तस्य समर्थनं कर्तव्यम् इति स्वाभाविकम्। भारतशासने अपि रशियानुकूलता यथा ताटस्थ्यनीतेः अविरोधेन संपादिता भवेत् तत् चिन्तयितव्यम् इत्यपि स्वाभाविकम्। कांग्रेस-पक्षस्य समाजवादोद्घोषणाद् अनन्तरं रशियानुकूलविचार-शीलता अपि न अस्वाभाविकी। परंतु साधारणजनतायाः का अपेक्षा अस्मिन् विषये भवितुम् अर्हति? ये अन्ये पक्षाः राजकीये क्षेत्रे कार्यं कुर्वन्ति ते कथं चिन्तयन्ति? रशियाविषये स्नेहभावः व्यवहारानुकूलः, उभयोः देशयोः लाभकरः, जगच्छान्तिकारकः भवतु इति अपेक्षा यदि साधारणजनतया व्यक्तीकृता स्यात् समुचितं भवेत्। अनया भावनया व्यवहारः कथं संपादनीयः इति राजनीति-कुशलानां शासकानाम् अधीनम्। यथा भारतः रशिया-स्नेहम् आकाङ्क्षते तथा रशिया अपि भारतस्नेहम् आकाङ्क्षते इति स्पष्टम्। परंतु तत्र उभयोः भूमिकयोः

साम्यं मूलभूतं तिष्ठतु इति न विस्मर्तव्यम् । भारतीयानाम् इव रशियनानाम् अपि स्नेहस्य आवश्यकता अस्ति इति मूलभूतं तत्त्वं भवतु । एकतः अपेक्षा, अन्यतः आवश्यकता इति अधिष्ठानं विचारस्य न भवतु ।

रशिया उपकर्ता, भारतः उपकृतः इति इव साम्यवादिनां विचारः । तटस्थतायाम् अपि रशियानुकूलता अधिकाधिकं भवतु इति जनतायाः विचारः । इति विचारप्रवाहः त्रिविधः । अतः आर्थिकानां राजकीयानां च घटनानां त्रेधा अन्वयः कृतः दृश्यते । एतद्विषये मतभेदानाम् इदम् एव मूलभूतं कारणम् । गन्धारेषु रशियनाक्रमणस्य समर्थनं साम्यवादिपक्षेण क्रियते । सदृशं समर्थनं भारतशासनं कर्तुं न शक्नोति, तथापि तत् रशियाविरोधम् अपि न सावधारणं ( Emphatically ) कर्तुम् इच्छति । अतः इन्दिरा-महाभागया 'रशियनाः जागतिकीं शक्तिं स्वविरोधे प्रबलीभूतां पश्यन्ति' इति संभाव्य परोक्षरूपेण गन्धाराक्रमणस्य समर्थनं कृतम् । 'वॉशिंग्टन् पोस्ट्' इति अमेरिकन वृत्तपत्रेण सार्धं संभाषणे इदं मतं तया प्रदर्शितम् । प्रसङ्गानुसारेण इदमपि तया उक्तं यत् गन्धारैः अमीनमहाभागः विद्विष्टः आसीत् , यतः सः बहून् गन्धारान् अघातयत् इति । वस्तुतः एतादृशं मतप्रदर्शनम् अपि अनावश्यकम् आसीत् इति मन्यामहे । रशियनैः शासकैरपि विस्तृतेन प्रमाणेन घातः कृतः इति अविस्मरणीयं सत्यम् ।

अस्मिन् संदर्भे भारतराष्ट्रपतेः विचारप्रकटनम् अभिनन्दनीयं भवति । तेन प्रीतिभोजप्रसङ्गे स्पष्टतया भारतनीतिः आविष्कृता । 'देशान्तरस्य अन्तर्गतशासने केनाऽपि राष्ट्रेण प्रच्छन्नाप्रच्छन्नतया हस्तक्षेपः कर्तुं प्रयतिते सति भारतस्य तीव्रः विरोधः भवेत्' इति तेन उक्तम् । उपचारं पालयता तेन रशियाकृतस्य गन्धाराक्रमणस्य नामनिर्देशः न कृतः । तथापि शासनस्य नीतिः अपि स्पष्टोक्त्या संदेहातीतं प्रकटिता इति समुचितम् अभवत् । भारतं रशिया च मित्रराष्ट्रे अपि जागतिकसमस्या विषये समभावनायां सत्याम् अपि न सदृशं विचारं कुर्वन्ति । भिन्नः दृष्टिकोणः अनयोः राष्ट्रयोः कतिपयेषु विषयेषु विचाराः, तेषां प्रकटीकरणं चाऽपि भिन्नम् । 'हिन्द-महासागरे बलिनां राष्ट्राणां सैनिकशक्तिमूलकाः ये व्यवहाराः प्रचलन्ति ते चिन्ताजनकाः, समीपस्थदेशानां तटस्थतां शान्ततां च दुर्बलीकुर्वन्ति' इति भारतराष्ट्रपतिमहोदयेन यद् उक्तं तत् सर्वथा आवश्यकम् आसीत् । तेन दिएगोगार्शिया-द्वीपस्य नामनिर्देशः कृतः सर्वेषां राष्ट्राणां हितार्थं मानवीयसभ्यतायाः संरक्षणार्थं च समर्थैः राष्ट्रैः प्रयत्नः कर्तव्यः इति आशासितम् । तथापि राष्ट्रहितं सभ्यता च साम्यवादिभिः ( प्रसङ्गतः इस्लामीयैः च ) स्वसत्तासंदर्भे एव विचार्यते । साम्यवादिराष्ट्राणाम् इस्लामीयानां वा सभ्यता सैव मानवीया सभ्यता, एतेषां राष्ट्राणां यत् हितं तदेव मानवमात्रस्य हितं, किं बहुना, जगतीतले एते एव हितविचारं प्रसारयितुं परमेशेन निर्मिते इति दृष्टिकोणः अवास्तविकः अपि एतैः राष्ट्रैः स्वीक्रियते इति दुर्दैववशात् स्थितिः । गन्धारेषु रशियनसैनिकाः, काम्पूचियामध्ये व्हिएत्नाम्-सैनिकाः, अन्यत्र अमेरिकासैनिकाः इति एतादृशी बलिनां राष्ट्राणां नीतिः । तां नीतिम् अङ्गीकृत्यैव मुखेन मानवहितसंबन्धविचाराः प्रकटयितव्याः इति समर्थानां राष्ट्राणां रीतिः । पाश्चात्यराष्ट्राणि न अस्मदपेक्षया समर्थतराणि भवन्तु, गन्धाराः पोलण्डदेशस्थाः युगोस्लावाः वा अस्मादातङ्किताः एव तिष्ठन्तु इति प्रयत्नशीलेन रशियादेशेन यदि तटस्थतायाः भारतेन सार्धं समर्थनपरं संयुक्तपत्रके स्वाक्षरं कृतं तर्हि तस्य किं मूल्यम् ? समर्थानां राष्ट्राणां वचनं प्रत्ययकारि भवति, परन्तु केवलं भविष्यति कालविषये न तु अवश्यं भूतघटनासंदर्भे । भूतसंबन्धः व्यावहारिकतया बलीयान् प्रत्ययोत्पादकः च भवति इति न्यायः । अस्मिन् विषये किं साहाय्यं समर्थनं वा कर्तव्यम् इति शासनं विचारयतु ॥

[ 'संस्कृतभवितम्' साप्ताहिकात् साभारव्यम् ]

# आधुनिकभारतीयभाषासु संस्कृतशब्दावलीगवेषणा

## आधुनिक भारतीयभाषाणां तत्समतद्भवशब्दसंचयेन तत्क्षेत्रविशेषाय संस्कृतपाठ्यक्रमविकासपरियोजना

श्रीमन्तः गया चरण त्रिपाठिनः, प्राचार्याः, गंगानाथझा के० सं० विद्यापीठे, प्रयागः

आधुनिके संदर्भे संस्कृतशिक्षणस्य नूतनसरलसरणेर्विकासो भृशमपेक्षत इति बहुतिथेन कालेन सर्वैः शिक्षाविद्भिर्वारंवारमुच्यते। परमस्य विकासस्य कः खलु आधारो भवेत् का च दिशा स्यात्, अर्थात् सरलीकरणं कथं सम्भवीति विषयोऽद्यापि अस्पृश्यतामेव भजते। न हि निषेधमात्रेण विधेयसिद्धिः शक्या कर्तुम्, न वा कतिपयेषां वाक्यानां शुकरटनेन लक्ष्यपूर्तिः सम्भवति। तद्यथा कतिपये विद्वांसः संस्कृतसंस्थाश्च शिविरायोजनेन तथा कुर्वते। परन्च अकरणान्मन्दकरणं श्रेयः इति, न्यायेन तेषां विदुषां तासां संस्थानां च संस्कृतस्य प्रचार प्रसारहेतवे कृतः क्रियमाणः करिष्यमाणो वा सर्वविधः प्रयासः सर्वथा स्तवनीय एव।

इतो देशस्वातन्त्र्योपलब्धेरनन्तरं विद्यालयेषु, विश्वविद्यालयेषु संस्कृतसंस्थासु च यत्र खलु संस्कृतशिक्षार्थिनां संख्या सततं समेधमाना वरीवर्त्ति तत्रैव जनसमाजेऽपि नैकस्तरीयाः संस्कृतजिज्ञासवः संस्कृतस्यैव माध्यमेन धार्मिकाध्यात्मिकसाहित्यिकाकाङ्क्षा परिपूरयितुमाकाङ्क्षन्ति। अतः परम् आधुनिकभारतीयभाषाणां समृद्धौ अभिनवपारिभाषिक शब्दावलीनिर्माणे चैतस्य यद् योगदानम्, तदप्यतिरोहितं सुधीमतां भाषातत्वविवेचनैकव्रतिनाम्?

नूनमेतानि बहूद्देशीयलक्ष्याणि निभाल्यैव केन्द्रीयशिक्षा- संस्कृत- मन्त्रालयेन 'राष्ट्रीय संस्कृतसंस्थान द्वारा संचालिते गंगानाथ झा केन्द्रीय-संस्कृत-विद्यापीठ, प्रयागे भाषानुभागः संस्थापितः। अस्यानुभागस्य मुख्यमुद्देश्यं संस्कृतस्य सार्वदेशिकप्रचारप्रसारार्थं तस्य सरलीकरणमेव।

सम्प्रति एतस्मिन् भाषानुभागे प्राचार्य डा० गयाचरण त्रिपाठिनोऽध्यक्षतायां सरलीकरणमभिलक्ष्य योजनाद्वयं प्रचलति। तत्राद्या तावत् आधुनिक भारतीयभाषाणां तत्समतद्भवशब्दावलीनां संचयनम्, अपरा चानया शब्दावल्या तत्तत्क्षेत्रविशेषस्य कृते संस्कृतस्याभिनवः सरलपाठ्यक्रमनिर्माणम्। तत्र प्रथमयोजनायामिदानीं पंजाबीभाषायाः तथोक्ताः शब्दाः संचीयन्ते। एतेषु चतुःसहस्रपरिमिताः शब्दा गताब्दे एव संचिता येषां प्रामाण्यं परीक्षितुं गतमार्चमासस्य दशमदिनांकादारभ्याषोडशदिनांकं दिल्लीविश्वविद्यालयस्य परिसरे डा० हरभजनसिंहस्याध्यक्षे एका विचारसंगोष्ठी समायोजितासीत्।

ऐषम उक्तशब्दसंचयनयोजनायां पंजाबीभाषायाः संस्कृतमूलकानामितरेषां त्रिसहस्रसंख्यानामभिनवानां शब्दानां शब्दपत्रेषु समालेखनं समजनि। तत्र प्रत्येकस्मिन् शब्दपत्रे गुरुमुखीलिप्यां पंजाबीशब्दः, तस्य, व्याकरणव्यवस्था, वारंवारता, रोमनदेवनागरीलिप्योर्ध्वन्यङ्कनम्, मूलसंस्कृतशब्दः, तस्य लिंगादि-व्यवस्था, हिन्दीभाषायामर्थश्चोल्लिखिताः सन्ति। इदमत्रावधेयम्, अस्यां शब्दावल्यां ते एव शब्दाः स्थानं लब्धवन्तः ये खलु संस्कृतमूलकाः सन्त इदानीमपि संस्कृतेनार्थसाम्यं दधते। संस्कृतात् विकसितानां येषां हि पंजाबीशब्दानां संप्रति संस्कृताद् भिन्नोऽर्थः, न खलु ते संगृहीताः। एवमेव तेषामर्थप्रदर्शने हिन्दीभाषायास्त एव शब्दाः प्रत्ताः ये नूनं तेभ्यो मूलशब्देभ्यो विकसिताः सन्ति। एवंच शब्दपत्रेषु शब्दानां संचयनं सर्वथा भाषावैज्ञानिकं समस्ति।

अपरस्यां पाठ्यक्रमविकासयोजनामेषः पंजाबीभाषाणां छात्राणां संस्कृतजिज्ञासूनां चोपयोगार्थं विनिर्मितं पाठ्यक्रमस्य प्रथमं प्रारूपमेकः संस्कृतस्य। अस्याधारेण पाठमालां विकासयितुं संस्कृतस्य अतिप्रचलितानाम् उक्तशब्दावलीसंगृहीतानां कतिपयेषां शब्दानां धातूनां च संकलनमपि विहितम्। एतएव शब्दाधातवश्चपाठमालाया आधारभूता भविष्यन्ति। एतान्शब्दान् धातूंश्च पंजाबीभाषाभाषिणः सारल्येन ग्रहीष्यन्ति, यतोहि यत्किंचित् परिवर्त्यैताननुदिनं व्यवहरन्ति ते। एवंच शब्दज्ञानेऽनायाससाध्ये सति ते व्याकरणज्ञानेऽधिकं कालं दातुं प्रभविष्यन्ति। फलतः भाषाज्ञाने समयाल्पता सरलता च समायास्यति।

भाषानुभागो नवीनान् शब्दान् संकलय्य पाठ्यक्रमस्य प्रथमंप्रारूपं च निर्माय एतयोः प्रमाण्यमाधातुमनाः पंजाबी-संस्कृतोभयभाषावगाहिणां विदुषां वैचारिककार्यगोष्ठी-समायोजनमावश्यकममंस्त। ततः प्राचार्यस्य रुचिपूर्ण-संस्तुत्या उत्साहपूर्णसंयोजनेन च अस्यैव विद्यापीठस्य परिसरे गताशीतिवर्षीय दिसम्बरमासस्य पंचदश दिनांकादारभ्य आविंशं षड्दिवसीया वैचारिकी कार्यगोष्ठी समपादि।

तदत्र संगोष्ठीप्रथमेऽहनि पूर्वाह्णे दशवादने समुपस्थितानां समेषां विदुषां परिचयानन्तरम् अमृतसरनगरीयगुरुनानकदेव-विश्वविद्यालयस्य भूतपूर्वपंजाबीविभागाध्यक्षेण आचार्य डॉ० प्रीतमसिंहेन संगोष्ठी वैधानिकमुद्घाटिता। समारोहस्येतस्यानुमंगलाचरणं विभागीयेन प्रवाचकेन श्रीशिवकुमार-मिश्रेण स्वकीये संयोजकीयवक्तव्ये समुपस्थिता भागग्रहीतारो विद्वांसः स्वागतेनाभिनन्दिताः। ततः विद्यापीठस्य प्राचार्यो विभागीययोजनाद्वयमनुभागिनः विदुषः परिचाययितुं व्याख्यानविस्तारं प्रास्तौत्। स्वकीये विषयबहुले व्याख्याने तेनोक्तम्, आधुनिकभारतीयभाषासु संस्कृतस्य प्रायोऽशीतिप्रतिशतमिताः शब्दा अस्माभिर्नित्यं लेखने पठने व्यवहारे च प्रयुज्यन्ते। नैतावदेव, अद्यत्वे भारतस्य प्रायः सर्वेष्वपि राज्येषु आधुनिकविज्ञाने राजनीतौ च प्रयोगार्थं निर्मीयमाणायाः पारिभाषिकशब्दावल्याः प्रमुख आधारः संस्कृतमेव। अस्मिन्नेव तद्विज्ञानं निहितम् येनानन्ता नवाः शब्दा निर्मातुं शक्याः। इदं विज्ञानं कुत्राप्यन्यत्र भाषायां सुदुर्लभम्। इदमेव तथ्यं फ्रेंचभाषोदाहारेण परिपोषयता तेनोक्तम् यत् टंकणयन्त्रस्य कृते फ्रेंचभाषायां न हि कोऽपि एकः शब्दो भवितुमर्हति। ते हि एनं 'मशीन लिखने की' इत्यनेन वाक्यभूतेन शब्देनाभिदधति। अंग्रेजीभाषाया मूलस्रोतसि लेटिने यद्यपि सन्तिनाम कतिपये धातवः, उपसर्गाः, प्रत्ययाश्च, तथापि पाणिनीयं प्रकृति-प्रत्यय विज्ञानं किमप्यपूर्वं सर्वथा तुलनां नार्हतीति, दृष्टचरं भाषानयनिपुणानाम्। सहस्रद्वयाधिकैर्धातुभिरेकसहस्रमितैः प्रत्ययैश्च भरिता भाषेयं जागतिकमर्थजातमभिव्यङ्क्तुं सर्वतोभावेन समर्था किल। ईदृशान् विचारान् प्रस्तूय प्राचार्योऽस्यां संगोष्ठ्यां विचारणीयं विषयं प्रति प्रतिभागिनां ध्यानमाकृष्टवान्। ततः विभागीयः प्राध्यापकः श्री आजादमिश्रो गतगोष्ठीप्रतिवेदनं प्रतिभागिविदुषां पुरस्तात् प्रस्तुवन् शब्दपत्रीयबिन्दूनां संशोधने विगतगोष्ठीस्वानुभवमप्युपातिष्ठपत्।

एतत्संगोष्ठीमानार्हनिदेशकः समारोहाध्यक्ष आचार्य डा० प्रीतमसिंहः स्वानुभवपूर्णोदाहारैः पंजाबीभाषायाः संस्कृतेन निकटतरः सम्बन्धः स्थापितवान्। तेनोक्तम्, पंजाबी भाषाद्यत्वे पुनः संस्कृतोन्मुखी जाता। अपभ्रंश-रूपाणि संस्कृत्य व्यवहाराचारः प्रचलितः। इदमेव कारणं यथा संस्कृतस्य पदादिः 'व' ध्वनिः 'ब' रूपं परिहाय पुनरद्यत्वे 'व' रूपे परिवर्तितः। अध्यक्षीयभाषणे तेन शब्दावलीसंकलनं पाठ्यक्रमविकासश्चेति योजनाद्वयमपि राष्ट्रियैकतासंसाधने सबलं सहायकं संसाधितम्।

वैचारिककार्यगोष्ठ्यामस्यां विभिन्नविश्वविद्यालयानां गुरुकुलमहाविद्यालयानां शिक्षासंस्थानांच विद्वांसो विशेषज्ञा भागमग्रहीषुः। तेषु सर्व श्री डा० प्रीतमसिंहः, भूतपूर्वोऽध्यक्षः, गुरुनानकदेवविश्वविद्यालय, अमृतसरस्य, डा० ओमप्रकाशवशिष्ठः प्रवाचकः, इंगलिश-पंजाबी कोशपरियोजनायाः, पंजाबीविश्वविद्यालय; चण्डीगढस्य, डा० अजमेरसिंह; व्याख्याता, पूर्वोक्तविश्वविद्यालयस्यैव, डा० वेदप्रकाशशास्त्री भूतपूर्वप्राचार्यः, डा० भक्तवत्सलमोहले, व्याख्याता, सामाजिकविज्ञान एवं मानविकी विभाग, एन० सी० ई० आर० टी०, नवदेहलीस्थः, आचार्य श्री विद्यानिधिपाण्डेयः, नवदेहलीस्थः, अस्य विद्यापीठस्य डा० ब्रह्ममित्र अवस्थी, प्रवाचकः, डा० किशोरनाथझा, प्रवाचकः, राघवप्रसादचौधरी, व्याख्याता, डा० जगन्नाथपाठकः, व्याखयाता, इत्येते विद्वांसः प्रमुखा आसन्।

उद्घाटनसमारोहस्य पश्चात् संगोष्ठीशुभारम्भात् पूर्णमेव विद्वांसो दलद्वये विभाजिताः। तत्र प्रथमं दलं शब्दपत्रेषूल्लिखितसमस्तविवरणानि विचारविमर्शद्वारकपरिवर्तनपरिवर्धनाभ्यां प्रमाणितानि संशोधितानि वा। अस्य दलस्याध्यक्षं मानवनिदेशको डा० प्रीतमसिंहोऽविभः द्वितीयदलस्य च डा० राघवप्रसादचौधरीति। अनेन द्वितीयदलेन प्रभूतं सुविचार्य विमृश्य च पंजाबक्षेत्रस्य कृते प्रारम्भिकस्तरीयसंस्कृतपाठ्यक्रमनिर्माणहेतवे व्यापका निर्देशाः प्रस्ताविषत।

एवंच षड्दिवसीयेयं संगोष्ठी स्वोद्देश्ये सर्वथा सफलाभूत्। योजनाद्वयेऽपि निर्धारितं कार्यलक्ष्यं संसाधितम्। अत्र पंजाबीभाषायाः प्रायः त्रिसहस्रसंख्याकानांशब्दानां लिपिः, वारंवारता अन्ये च बिन्दवो निर्धारिताः। शब्दपत्रेषु रोमनदेवनागरीलिप्योर्गुरुमुखीलिपेर्न लिप्यन्तरणम्, प्रत्युत पंजाबी शब्दोच्चारणध्वनेः खलु ध्वन्यंकनमस्ति। एतेषां संकलितानां शब्दानामुपजीव्यग्रन्थाः यथा-श्री आर० एल० टर्नरप्रणीतः 'कम्परेटिव डिक्शनरी आफ दि इन्डोआर्यन-लैंग्वेजेज', 'भारतीयव्यवहारकोश', 'सबकी बोली', शिक्षामन्त्रालयभारतसर्कारेण प्रकाशितः 'हिन्दी वर्ड स कॉमन टू अदर इण्डियन लैंग्वेजेज', इत्येते सन्ति। मैयासिंहलिखितः 'दि पंजाबी डिक्शनरी', संस्कृतधातुपाठ', सिद्धांतकौमुदी', संस्कृतशब्दार्थकोमुदी' संस्कृत शब्दार्थ कौस्तुभ' 'बृहत् अंग्रेजी हिन्दीकोश' इत्येते ग्रन्थाः प्रामुख्येन सहायकाः सन्ति।

एवंविधया वैचारिककार्यगोष्ठ्या यत्र अधिकृते कार्ये गुणात्मकताभिवर्धते, तत्रैव संस्कृतस्य महत्त्वं तद्योजनायाः निर्माणाधीनग्रन्थस्य च कीर्तिरनायासेन पर्याप्तं प्रचरति, प्रसरति, विशुध्यति च। नियतमेवानेन संयोजनेन कार्ये सम्भावितदोषापमार्जनं संजायते। पर्यवसाने चाशास्महे, राष्ट्रियसंस्कृतसंस्थानं प्रयागस्य विद्यापीठस्य प्राचार्यमहोदयश्च कार्यगौरवमभिलक्ष्यैवंविधकार्यगोष्ठीसमायोजनेन प्ररूपितपरियोजनायां गुणवत्तामभिवर्धिष्येते।

अस्यायोजनस्य संयोजनं संचालनंच विभागीयः प्रवाचकः श्रीशिवकुमारमिश्रः, प्राध्यापकः, श्री आजादमिश्रश्च सम्पादितवन्तौ।

# श्रीराधायाः विवेचनम्

डा० श्री उमारमण झा
श्रीरणवीर केन्द्रीय संस्कृत विद्यापीठ
शास्त्रीनगर, जम्मूतवी

अखण्ड ब्रह्माण्डनायकस्य श्रीकृष्णस्य सहचरी रासेश्वरी राधिका नित्या आनन्दमयी मूर्तिश्च वर्तते। तया विना कृष्णः नैव स्थातुं शक्नोति। सा चिन्मयविग्रहवती शक्तिरस्ति! श्रीराधा भारतीयवाङ्मयस्य गेया ध्येया साध्या आराध्या देवी आस्ति। सैव श्रीकृष्णस्य आह्लादिनी शक्तिरस्ति। गौडीय वैष्णवानां कृते श्रीराधा उज्ज्वलरसस्य दिव्यज्योतिरस्ति।

राधाशब्दस्य व्युत्पत्तिः एवं प्रकारेण दृश्यते—अनया राधितः अथवा अनया आराधितः (श्रीकृष्णः) इति राधा। भागवतेऽपि उक्तम्—

अनया राधितो नूनं भगवान् हरिरीश्वरः।
यन्नो विहाय गोविन्दः प्रीतो यामनयद्रहः॥

भाग. १०।३०।२४

श्री सनातनगोस्वामी बृहत्तोषिणीव्याख्यायां लिखति—राधयति आराधयति श्रीराधेति। वैष्णवतोषिणीव्याख्यायां श्रीजीवगोस्वामी अपि एवमेव व्याख्यां स्वीचकार।

श्रीविश्वनाथचक्रवर्ती सारार्थदर्शिनीव्याख्यायां लिखति—पदचिह्नैरेव तां वृषभानुनन्दिनीं परिचित्य अन्तराश्वास्ताः बहुविधगोपीजनसंघट्टे तत्रबहिरपरिचयमिवाभिनयन्त्यः तस्याः सुहृदः तन्नामनिरुक्तिद्वारा तस्याः सौभाग्यं सहर्षमाहुः।

विशुद्धिरसदीपिकायां वाराहतन्त्रे च हरिः वृन्दावने गोविन्दनाम्ना प्रख्यातोऽस्ति। अतः गोविन्दम् अर्चनाबलेन आराधनाबलेन च या गोपीः वशीकरोति सा वृन्दावनेश्वरी अस्ति। अतएवोक्तम्—

स च अनया सह या तया राधितः वशीकृतः सन् गोविन्दः श्रीवृन्दावनेश्वरीत्वादस्याः तस्य च वृन्दावनेश्वरत्वादिति भावः। वृन्दावने तु गोविन्दमिति वराहतन्त्रोक्तेः।

निम्बार्कमतानुयायिनः टीकाकारस्य शुकदेवस्य मतमेवमस्ति—

राधा सह जाता अस्य तथा तारकादिभ्य इतच्, राधाकृष्णविहारे हेतुभूतेयमित्यर्थः तया सह विहारोऽतिगोप्यत्वान्नोक्तः।

श्रीमद्भागवते राधाया नाम शुकदेवेन न नीतम्। अस्य कारणमिदं यतः विरहानलसन्तप्तस्य कृष्णस्य वर्णने तल्लीनः सन् राधायाः नाम अपि मुखे न आनयत्।

अस्य आशयः सनातन गोस्वामी श्रीमद्भागवतामृते एवं प्रकारेण स्पष्टीकरोति—

गोपीनां विततादभुतस्फुट तरप्रेमानलार्चिच्छटा
दग्धानां किल नाम कीर्तनकृतात् तासां विशेषात्स्मृतेः
तत्तीक्ष्णोज्ज्वलनच्छिखाग्रकणिकास्पर्शेन सद्यो महा-
वैकल्यं स भजन् कदापि न मुखे नामापि कर्तुं प्रभुः॥

राधायाः गोपनस्य कारणमिदं यत् इष्टसम्पत्तिः गोप्या एव भवति। गोपनादिष्टसम्पत्तिः सर्वथा परिसिध्यति।

हिन्दीभाषायां रसिको व्यासः लिखति—

परमधन राधा नाम अपार।
जाहि श्याम मुरली मे टेरत सुमिरत बारम्बार॥

जत्र,मन्त्र और वेदतन्त्र में सबै तारको तार।
श्रीसुकदेव प्रकट नहि भाख्यो जान सार कौ सार॥
कोटिकरूप धरैं नन्दनन्दन तऊ न पायौ पार।
व्यासदास अब प्रकट बखानत डारि भार में भार॥

अतः शुकदेवेन राधायाः नाम्नः नैव चर्चा कृतेति मन्तव्यम्।

विशुद्धरसदीपिकायामुक्तं यत् राधायाः साहचर्यं प्राप्य गोविन्दः भगवान् इति पदेन व्यवह्रियते। भगवान् सकलैश्वर्यमाधुर्यप्रकाशकः। अनया तया सह गोविन्दो भगवान् एतत्कृतैव अस्य भगवत्ता इति भावः। पुनश्च तत्रैवोक्तम्— साक्षान्नामानुक्तिश्च विपक्षादिसमुदाय – गोपनीयत्वात् रसिकानां मते व्यञ्जनाया एव मुख्यत्वं न तु मुख्याया इति सहचरीणामभिप्रायः। ( विशुद्धि० १०।३०।२८ )

यथा आत्मा शान्तरूपः तथैव परब्रह्मरूपा राधा अस्ति––श्री हरेरात्मत्वेन वक्ष्यमाणायाः परब्रह्मभूतायाः मनोवचोऽगोचरायाः अनिर्देश्यात् गौरवाच्च नामानुक्तिरिति श्रीमुनीन्द्राभिप्रायः। आत्मना रमयत्यन्यत्रापि आत्मनश्चानिर्वचनीयत्वेनैव कथनम्

अवचनेनैव प्रोवाच इति श्रुतेः।

भागवते अस्पष्टरूपेण राधायाः उल्लेखोऽस्ति––

नमो नमस्तेऽस्त्वृषभाय सात्वतां,
विदूरकाष्ठाय मुहुः कुयोगिनाम्।
निरस्त–साम्यातिशयेन राधसा,
स्वधामनि ब्रह्मणि रंस्यते नमः॥

अत्र ऐश्वर्यवाचको राधसूशब्दः वर्तते।

रूपगोस्वामिना उज्ज्वलनीलमणिग्रन्थे कृष्णदास कविराजेन चैतन्यचरितामृते च पद्मपुराणस्य श्लोकोऽयमुदधृतः–

यथा राधा प्रिया विष्णोस्तस्याः कुण्डं प्रियं तथा।
सर्वगोपीषु सैवैका विष्णोरत्यन्तवल्लभा॥

यदि पद्मपुराणस्य प्राचीनत्वमङ्गीक्रियते तर्हि नूनमेव गौडीयवैष्णवाः पद्मपुराणादेव राधातत्त्वस्य एतादृशं विवरणमङ्गीचक्रुरिति वक्तुं शक्यते।

पद्मपुराणस्य ब्रह्मखण्डस्य सप्तमेऽध्याये राधाष्टमीव्रतविधानं दृश्यते। तत्रैवोक्तं यत् भाद्रशुक्लाष्टम्यां तिथौ वृषभानोः यज्ञभूमौ राधा प्रकटिता बभूव। राजा वृषभानुः तां प्राप्य स्वधर्मपत्न्यै समर्पयामास। पातालखण्डस्य ६६ तमाध्यायादारम्य वृन्दावनमहिमा उक्त अस्ति। तत्रैव राधायाः उल्लेखः एवं प्रकारेणास्ति––

तत्प्रिया प्रकृतिस्त्वाद्या राधिका कृष्णवल्लभा।
तत्कला कोटिकोट्यंशा दुर्गाद्यास्त्रिगुणात्मिकाः॥
तस्याः अङ्घ्रिरजः स्पर्शात् कोटिविष्णुः प्रजायते।
( पद्म. पाताल. अ. ६७ )

अर्थात् राधा आद्या प्रकृतिः कृष्णस्य वल्लभा अस्ति। दुर्गाद्याः देव्यः तस्याः कलायाः कोटिकोट्यंशं धारयन्ति। तस्याः अङ्घ्रिरजःस्पर्शात् कोटिविष्णवः प्रजायन्ते। पद्मपुराणस्य पातालखण्डे ७७ तमे अध्याये इदमपि उक्तं यत् राधा विद्याऽविद्यारूपिणी, परा, त्रयी, शक्तिरूपा, मायारूपा, चिन्मयी, देवत्रयोत्पादिका च अस्ति। अस्या आलिङ्गनसुखं प्राप्य वृन्दावनेश्वरः आनन्दमग्नो भवति–

तासां मध्ये तु या देवी तप्तचामीकरप्रभा।
द्योतमाना दिशः सर्वाः कुर्वती विद्युदुज्ज्वलाः॥
प्रधानं या भगवती ययारूपमिदं ततम्॥

## राधायाः सख्यः—

राधाकृष्णयोः तत्वचिन्तनमतीव दुष्करमिवास्ति तथापि विभिन्नासु भाषासु राधाकृष्णयोः कथादिविषये रासादि विषये भक्तभावनादिविषयेषु च प्रौढ़ाः ग्रन्थाः निबन्धाश्च दृष्टिपथमायान्ति। राधायाः सख्यः असंख्याताः सन्ति तासु प्रामुख्येन पञ्चप्रकारकाः सख्यः परिगण्यन्ते।

(१) सखीः (२) नित्यसखीः (३) प्राणसखीः (४) प्रियसखी तथा (५) परम श्रेष्ठ सखीः।

पुराणादिग्रन्थेषु समुपलब्धाः कुसुमिका–विन्ध्या–धनिष्ठा–प्रभृतयः सखीरूपेण सन्ति। कस्तूरी–मणि–मञ्जरिकादयः सख्यः राधायाः नित्यसख्यः सन्ति। शशिमुखी-वासन्तीलसिकाद्याः प्राणसख्यः सन्ति। कुरङ्गाक्षी-मञ्जुकेशी-माधवी-मालतीत्यादयः प्रियसख्यः सन्ति। एवञ्च ललिता–विशाखा-चित्रा–इन्दुलेखा–चम्पक लता-रंगदेवी-तुंगविद्या-सुदेवी च अष्टौ परमश्रेष्ठाः सख्यः राधायाः सन्तीति विदुषां मतम्। एताः अष्टौ सख्यः एव अष्टसखीति पदेन सुविख्याताः सन्ति। मधुकेलिवल्यां, वृन्दावनविलास-प्रभृति ग्रन्थेषु च राधायाः सखीनामुल्लेखः दृश्यते, यत्र ताः सदैव श्रीराधिकादेव्याः मनोभावानुकूलमाचरन्ति। ताश्च सर्वदैव रसवर्षणार्थं समुद्यताः दृश्यन्ते। रस विस्तारे श्री ललिताद्याः अष्टसख्यः प्रमुखाः सन्ति।

श्री कृष्णस्य नित्यकैशोरलीलायां श्री ललितायाः आयुः १४ वर्षाणि, ३ मासाः १२ दिनानि यावदस्ति। श्री ललितायाः सर्वदैव एतादृश एव आवेशो भवति यत्सा चतुर्दशवर्षीया एवास्तीति। एवमेव श्रीविशाखा १४ वर्षाणि २ मासौ, १५ दिनानि यावत् आयुर्दधाति। श्रीचित्रायाः १४ वर्षाणि १ मासः ऊनविंशतिदिनानि यावदेव आयुः वर्तते। श्री इन्दुलेखा १४ वर्षाणि द्वौ मासौ द्वादशदिनानि आयुर्धारयति। श्री चम्पकलतायाः आयुः १४ वर्षाणि द्वौ मासौ १४ दिनानि यावत् वर्तते। श्रीरङ्गदेवी १४ वर्षाणि द्वौ मासौ अष्टौ दिनानि यावन्मात्रम् आयुर्धारयति। श्रीतुंगविद्यायाः १४ वर्षाणि द्वौ मासौ ८ दिनानि मात्रमेव आयुर्धारयति। यदा यदा श्रीराधादेव्याः अविर्भावो भवति तदा तदा एता अपि अवतरन्तीति भागवतानां विश्वासः।

एतासां अष्टसखीनां जीवनचरित्राणि श्रीराधादेव्याः लीलासु सर्वथैव अनुस्यूतानि सन्ति। एतासां स्तुतिः एवं प्रकारेणास्ति—

गोरोचनारुचिमनोहरकान्तिदेहाम्
मायूरपुच्छतुलितच्छविचारुचैलाम्।
राधे तव प्रियसखीं च गुरुं सखीनाम्
ताम्बूलभक्तिललितां ललितां नमामि॥

अर्थात हे राधे! गोरोचनवत् यस्याः शरीरे कान्तिरस्ति, या मयूरपिच्छामिव चित्रितां सारिकां धारयति, तव ताम्बूलसेवा यस्याः अधिकारेऽस्ति। सखीसु प्रमुखा गुरुतुल्या च यास्ति तां प्रियसखीं ललितामहं वन्दे।

विशाखायाः स्तुतिः एवं प्रकारेण क्रियते—

सौदामिनीनिचयचारुरुचिप्रतीकां,
तारावलीललितकान्तिमनोज्ञचैलाम्।
श्रीराधिके तव चरित्रगुणानुरूपा
सद्गन्धचन्दनरतां विशये विशाखाम्॥

चित्रामधिकृत्योच्यते—

काश्मीरकान्तिकमनीयकलेवराभां
सुस्निग्धकाचनिचयप्रभचारुचैलाम्
श्रीराधिके! तव मनोरथवस्त्रदाने
चित्रां विचित्रहृदयां सदयां प्रपद्ये॥

इन्दुलेखायाः स्तुतिं करोति—

नृत्योत्सवां हि हरितालसमुज्ज्वलाभां
सद्दाडिमी कुसुमकान्तिमनोज्ञचैलाम्।
वन्दे मुदा रुचिविनिर्जितचन्द्ररेखां
श्रीराधिके तव सखीमहमिन्दुलेखाम्॥

चम्पकलतामधिकृत्योक्तम्—

सद्रत्नचामरकरां वरचम्पकाभां
चाषाख्यपक्षिरुचिरच्छविचारुचैलाम्।
सर्वान् गुणां स्तुलयितुं दधतीं विशाखाम्
राधेऽथ चम्पकलतां भवतीं प्रपद्ये॥

श्रीरङ्गदेव्याः स्तुतिः एवं क्रमेणास्ति—

सत्पद्मकेसरमनोहरकान्तिदेहाम्

प्रोद्यज्जवाकुसुमदीधिति चारुचेलाम् ।

प्रायेण चम्पकलताधिगुणां सुशीलां

राधे ! भजे प्रियसखीं तव रङ्गदेवीम् ॥

श्रीतुङ्गविद्यायाः स्तुतिः इत्थं क्रियते—

सच्चन्द्रचन्दनमनोहरकुंकुमाभां

पाण्डुच्छविप्रचुरकान्तिलसद्दुकूलाम् ।

सर्वत्र कोविदतया महितां समज्ञाम्

राधे ! भजे प्रियसखीं तव तुङ्गविद्याम् ॥

श्रीसुदेवीं देवीं स्तौति—

प्रोत्तप्तशुद्धकनकच्छविचारुदेहां

प्रोद्यत्प्रवालनिचयप्रभचारुचैलाम् ।

सर्वानुजीवनगुणोज्ज्वल भक्तिदक्षां

श्रीराधिके ! तव सखीं कलये सुदेवीम् ॥

एवं प्रकारेण ललितादीनाम् अष्टसखीनां विवेचनमस्ति ।

# कर्ममीमांसादर्शनम्

[ मोक्षपादः ]

भगवत्पूज्यपादाः महर्षयः ज्ञानानन्दगुरुवर्याः

निःश्रेयसोद्देश्येन क्लेशहेतुं निर्णयति—

**स तु क्लेशहेतुः ॥ २१ ॥**

स संगः क्लेशस्य कारणम् । स्वरूपात् तटस्थभूमेः समुदयकरः, द्रष्टृदृश्यसम्बन्धस्य स्थापयिता, द्वैतप्रपञ्चहेतुः संग एव क्लेशकारणम् । संगस्य क्लेशहेतुत्वनिर्णयार्थमेवात्र सूत्रे "तु" शब्दप्रयोगः । क्लेशविषये पूज्यपादोमहर्षिः पतञ्जलिरभिधत्ते—

"अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्चक्लेशाः"

"नित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या"

"दृग्दर्शनशक्त्योरेकात्मतैवाऽस्मिता"

"सुखानुशयी रागः"

"दुःखानुशयी द्वेषः"

"स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः" इति ।

शङ्कते—ननु द्रष्टृदृश्यसम्बन्धस्थापनसमकालमेव किं क्लेशोद्गमः ? यद्येवं चेत्तर्हि परमेश्वरसम्मुखेऽपि प्रकृते र्दृश्यत्वात् किमीश्वरेऽपि क्लेशसम्भावना ? व्युत्थानेन सहैव किं क्लेशोऽपि समुत्पद्यते ? समाधत्ते-पूज्यपादो महर्षिः पतञ्जलिः क्लेशरहितं पुरुषविशेषमीश्वरमुवाच, तदद्विरुक्तिरनुचिता । सुतरामीश्वरे क्लेशसम्भावनाविरहात, ब्रह्मणि च द्रष्टृदृश्यसम्बन्धस्थापनसमकालमेव परमेश्वरभावोद्गमात्, पूज्यचरणेन महर्षिणाऽङ्गिरसा दैवीमीमांसादर्शने तदेतत्सिद्धान्ति-

त्वाच्चैतदभ्युपगन्तव्यमेव यद् द्रष्टृ दृश्यसम्बन्धस्थापनेन सहैव क्लेशस्योदयो नैव जायते। ईश्वरे द्रष्टृदृश्यसम्बन्धोऽलौकिको बुद्ध्यगम्यश्चातः क्लेशसम्भावना नास्ति। वस्तुतो द्रष्टृदृश्यसम्बन्धस्थापनकरी विद्योपस्थितिः क्लेशजननी न भवति। प्रकारान्तरेणापि विज्ञानमिदमवबोधयति, तथा हि—व्युत्थानेनैव क्लेशो न समुत्पद्यते, यत्र विद्याविलासस्तत्र व्युत्थानं वा द्रष्टृदृश्यसम्बन्धसद्भावो वा स्यात् न तत्र क्लेशसम्भावना। विज्ञानमेतदेवमप्यवगम्यताम्—यत्र प्रकृतिदृश्या न तत्र क्लेशो यत्र विषयो दृश्यस्तत्र क्लेशसम्भावना निश्चिता ॥ २१ ॥

प्रसंगात्तद्विरतेरुपायः प्रोच्यते—

## कर्मभक्तियोगसमन्वितस्त्वानन्दकरः ॥ २२ ॥

कर्मणा भक्त्या योगेन च समन्वितो युक्तः संग आनन्दकर आनन्दोत्पादको विज्ञेयः संगावस्था यदि कर्मभक्तियोगैरन्विता चेत्तदानीं साऽऽनन्ददायिनी जायते। क्लेशः आनन्दश्चेत्युभौ परस्पर – विरुद्धौ, क्लेशो जीवभावः, आनन्दश्च ब्रह्मभावः। तमः प्रकाशवद् विरुद्धधर्माणौ क्लेशानन्दौ विषयप्रसंगात् अभ्याससाहाय्येन कथमिव क्लेशसमुत्पत्तिरिति प्रागेव प्रपञ्चितम्। स्वस्वरूपच्युतिमात्रेणैव पुरुषः प्रकृतिपतित आत्मानं प्रकृतिवन्मन्यमानो ब्रह्मस्वरूपतो जीवत्वमनुभवति। तदानीमविद्यादयः क्लेशास्तत्र समुद्यन्ति, एभिरेव क्लेशैर्ग्रस्तो जीवो नानादुःखमनुभवन् जन्म-मृत्युचक्रे बम्भ्रम्यते। एभ्यः क्लेशेभ्यो विरतिमवाप्य मुक्तिमार्गेऽग्रेसरीकर्तुं पूज्यचरणो महर्षिः सूत्रकारो व्याहरति यद् यथायथा जीवः कर्मभक्तियोगैर्युक्तो भवन् अग्रेसरति, तथा तथा क्लेशस्तत्र ह्रासमुपैति आनन्दश्च प्रवर्धते तात्पर्यमेतद् यत् विहितकर्मानुष्ठानेनाधिभौतिकशुद्ध्यधिगमो मलनाशश्च, उपासनाप्राणस्वरूपाया भक्तेः, उपासनाशरीरस्वरूपस्य योगस्य च साधनेन संवलितस्योपासनाकाण्डस्य साधनेनाधिदैवशुद्धिलाभः, तथैव विक्षेपनाशात् ज्ञानराज्यप्राप्तिः। इत्थं प्रकारेण जीवो ब्रह्मानन्द पारावारावगाहनाधिकारवान् जायते ॥ २२ ॥

तदन्तिमं फलं निर्णयति—

## ततः स्वरूपाधिगमः ॥ २३ ॥

ततस्तेन स्वरूपस्याधिगमो भवतीत्यर्थः। एवं हि कर्मभक्तियोगानां नियमितमेवनेनाध्यात्मशुद्धौ सत्यां साधकान्तःकरणादावरणं विनश्यति। तदानीमसौ भाग्यवान् तत्त्वज्ञानी साधकः स्वरूपोपलब्धिसामर्थ्यमधिगच्छति ॥२३॥

अन्यदपि—

## संगाभावात् जीवन्मुक्तौ तन्नाशः ॥ २४ ॥

संगस्य अभावात् जीवन्मुक्तौ, तन्नाशः तस्य क्लेशस्य व्युत्थानस्य वा नाशो जायते। यत्र पूर्णताप्राप्तमहापुरुषे स्वरूपोपलब्धिरसौ जीवन्मुक्तः प्रोच्यते। तत्र वासनाविलयात् तत्त्वज्ञानप्रभावतश्च संगनाशात् स्वत एव व्युत्थानं विलीयते। स हि महापुरुषः सशरीरोऽपि ब्रह्मस्वरूपः। प्रारब्धकर्मोपभोगाय तदीयं शरीरं कुलालचक्रवत् कियते कालाय जीवितं परिदृश्यते। अन्यथा तदर्थं शरीरस्य स्थितिरस्थितिर्वा समानैव। सच जीवन् एव मुक्तो निःश्रेयसपदमधिकरोति ॥ २४ ॥

नाशक्रममुदीरयति—

## तन्नाशात् तन्नाशः ॥ २५ ॥

तन्नाशात् व्युत्थानस्य नाशात् तन्नाशः अभ्यासस्य नाशो भवतीत्यर्थः। कारणनाशे कार्यनाशोऽवश्यम्भावो। विषयसंगविनाशादेव व्युत्थाननाशो जायते। अज्ञानी जीव एतदवधारयितुं न पारयति। प्रलयस्य मुक्तेश्चाप्यवस्थायामेव दृश्यते। दृश्यप्रकृतौ विलयं गतायां प्रपञ्चमपि विलीयते, केवलं ब्रह्मैवावशिष्यते। मुक्तावस्थायां तत्त्वज्ञानोदयेन दृश्यप्रपञ्चाभावानुभूतौ सत्यां स्वरूपमुपलभ्यते। अतो निश्चप्रचमिदं यत् दृश्याभावाद व्युत्थानाभावः, व्युत्थानाभावेऽभ्यासाभावश्च। व्युत्थानस्यानस्तित्वेऽभ्यासो नैव स्थातुमर्हति। अतो जीवन्मुक्तमहापुरुषे व्युत्थानस्य क्षणिकत्वादभ्यासस्यापि क्षणिकत्वमेव, न तस्य स्थायित्वम्। अतः सिद्धमेतद यत् व्युत्थाननाशाद अभ्यासनाशोऽप्यवश्यं जायते ॥ २५ ॥

[ क्रमशः

## फार्म नं० ४

| | |
|---|---|
| १—प्रकाशनस्थानम् | श्री भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी। |
| २—प्रकाशनस्यावधि | मासिकम् |
| ३—मुद्रकस्य नाम | डॉ० परमहंस मिश्र: एम. ए., पी-एच्. डी. साहित्याचार्य: |
| ४—किं भारतनागरिकः ? | अस्ति। |
| प्राप्तिस्थानम्— | श्री भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी। |
| ५—प्रकाशकस्य नाम | डॉ० परमहंसमिश्र एम. ए., पी-एच. डी. साहित्याचार्य: |
| किं भारतस्य नागरिक: ? | अस्ति |
| प्राप्ति स्थानम् | श्री भारतधर्ममहामण्डलम्, लहुराबीर वाराणसी। |
| ६—सम्पादकस्य नाम | डॉ० परमहंसमिश्र:, एम. ए. पी-एच्. डी. साहित्याचार्य: |
| किं भारतस्य नागरिक: ? | अस्ति |
| प्राप्तिस्थानम्— | श्री भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी। |
| ७—तेषां नामानि ये स्वामिन: वित्तसहभागिनः वा सन्ति | १—श्रीमती विद्यादेवी रेजिडेन्ट सेक्रेटरी<br>श्री भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी।<br>श्रीमती सुन्दरीबाई पांई, सहायक रेजीडेन्ट सेक्रेटरी<br>श्री भारतधर्ममहामण्डलम्, लहुराबीर, वाराणसी।<br>३ डॉ० परमहंसमिश्र: स० सेक्रेटरी<br>श्री भारतधर्ममहामण्डलम्, लहुराबीर वाराणसी। |

अहम् डॉ० परमहंसमिश्र: एतद्द्वारा घोषितं करोमि, यत् मम ज्ञानविश्वासयोरनुसारमुपर्युक्तं विवरणं, सत्यमस्ति।

२१-३-८१

डॉ० परमहंसमिश्र:

प्रकाशक:

पञ्जीकृत-संख्या— एल० आर० एन०/१०

# काशी पण्डित सभा—उपाधिवितरणम्

नवति वर्षीय-प्राचीन काशी पण्डित सभातः संस्कृतरनातकाय राजस्थानीय श्री सीतारामन्दिर—वालोत्तरा-मठस्य प्रसिद्ध माहान्ताय श्रीराम शरणदाश महोदयाय 'सार्वभौम भागवत रत्नम्' इत्युपाधि र्दीयत। अत्रकाशीस्थाः सर्वेऽपि शिष्टाविद्वांसः सम्मिलिता— अभूवन्। काश्यां काश्मीरीगंजे श्रीराममन्दिरे समारोहः समजनि। समेषामेव विशिष्ट-विदुषां श्री भरतमिश्रापरनाम्नां सोऽहं बाबानां श्री वटुकनाथशास्त्रिखिरते महाभागानां फलाहारीति प्रसिद्ध नाम्ना श्रीरमापति त्रिपाठिनां श्री एडवोकेट पं० वन्दीकृष्णत्रिपाठि महोदयानां श्रीकेदार नाथ ओझामहोदयानां श्री दीनानाथत्रिपाठि प्रभृति विदुषां श्रीवैष्णव वासुदेवाचार्य श्रीमोहन्त रामबालकदास प्रभृति सान्त महात्मनां भाषणानन्तरं गृहीतोपाधिना सन्तरामशरण वैष्णवेन सप्रतिज्ञं वक्तव्यं विहितं यद्—विदुषामाशीर्वचनं पूरयितुं अहं यथा—शक्ति प्रयतिष्ये। सर्वावसाने काशी पण्डितसभाध्यक्षेण विद्यावारिधि श्री पं० गोपालशास्त्रिणा दर्शकेशरिणा गृहीतोपाधये श्रीसन्तरामशरण वैष्णवाय स्वशिष्याय शुभाशीः प्रदत्ता—

विजयाय हि निर्याहि प्रतपन् रश्मिवानिव मानं विधम लोकेस्मिन्ननार्याणां समन्ततः
धर्मं सनातनं लोके प्रसृतं पूर्ववद्भवेत् पाठन पाणिनीयेन नयेन व्याकृतेर्भवेत् इति।

ततः काशीपण्डित सभाया महामन्त्रिणा श्री पं० विनोदरावपाठकेन सदस्येभ्यो धन्यवादं दत्वा विद्वत्सत्कारपूर्वकं सभाविसर्जनम्—कारीति शिवम्।

सम्पादकः श्रीदीनानाथत्रिपाठी काशीस्थः

(पत्रम्)

प्रेषकः— डॉ० आर० पाण्डेय एम. ए. पी. एच. डी.,
हेड आफ दी डिपार्टमेन्ट आफ संस्कृत
मारवाड़ी कालेज राँची, विहार

सेवायाम्
श्रीयुत सम्पादकाः डॉ० परमहंसमिश्र महोदयाः
श्री भारतधर्ममहामण्डलस्य मासिकसंस्कृत—
मुखपत्रस्य सूर्योदयस्य, लहुराबीर, वाराणसी।

मान्याः,

भवद्भिः प्रेषितं श्री भारतधर्ममहामण्डलस्य मासिक संस्कृतमुखपत्रस्य सूर्योदयस्याङ्क—चतुष्टयं फरवरी मासे लब्धम्। पुनश्च मार्चमासे प्रोक्तस्य सूर्योदयस्य जनवरी मासिकाङ्कमपि प्राप्तम्। मासिक संस्कृत-पत्रमिदं वस्तुतः संस्कृतजगति संस्कृतस्य कल्याणाय विराजतेतराम्। एतादृशं समृद्धं सरलसंस्कृत-भाषया सम्वलितं लोकरञ्जनपरं धर्मरस—रसाप्लावितं संस्कृतेः समुद्बोधकं युगानुरूपं संस्कृतमासिकपत्रं नाद्यावधि अवलोकितम्। भारतीयतायाः संरक्षणाय प्रवृद्धं पत्रमिदं विश्वकल्याणायेति मिश्रप्रेचम्।

अस्तु 'निरुक्तं धार्मि परिवर्तनञ्चेति शीर्षकीय दशपृष्ठात्मकः शोधलेखः सूर्योदये प्रकाशनार्थं प्रेप्यते।

जयतु संस्कृतम् * जयतु संस्कृतिः

भवदीयः
रामाशीष पाण्डेय

सम्पादकः, प्रकाशकः, मुद्रकश्च-डॉ० श्री परमहंस मिश्रः, श्रीभारतधर्ममहामण्डलम् लहुराबीर, वाराणसी—२२१००१
मुद्रण-स्थलम्—हनुमान मुद्रण यन्त्र, पियरी कलाँ वाराणसी।

# सूर्योदयः

**श्रीभारतधर्ममहामण्डलस्य मासिकं संस्कृतमुखपत्रम्**

५८ तमे वर्षे ] ❀ वाराणसी ❀ अप्रैल १९८१ वैशाखः २०३७-३८ ❀ [ अङ्कः—४

सम्पादकः—

डॉ० परमहंस मिश्रः


❀

जयतु सुरभारती

❀


वार्षिकं मूल्यम्

दशरूप्यकाणि

१० / ००

❀

प्रत्येकाङ्कमूल्यम्

एक रूप्यकम्

१/००

❀

आजीवन शुल्कम्

शतं रूप्यकाणि

[illegible]


प्राणः प्रजानामुदयत्येष सूर्यः

शत० ६।७।६।२०

## ❀ अयं विमर्शः ❀

कोऽहं, किमिदं, केनाऽऽकलितम् !  
नित्यं सदसद् – ऋतसवलितम् !  
व्यक्तं विलसति विश्वरहस्यम्  
महासमीहोन्मेषोत्कर्षः—  
अयं विमर्शः !

कोयं कालः, कोयं देशः ?  
अस्तित्वे प्रसरति परिवेषः !  
बिम्बः प्रतिबिम्बत्याश्चर्यम्  
शुचिसंकल्पविकल्पादर्शः  
अयं विमर्शः !

विश्वं व्याप्य स्थितः समन्तात् !  
वेत्ति, करोति पिपर्त्ति पुरस्तात् !  
अमृत--सुरभि--रस-- संसृतिसरिता  
वहति शाश्वत संविद्–हर्षः !  
अयं विमर्शः !

डॉ० परमहंस मिश्रस्य

# विषय-सूची

| क्रमाङ्कः | लेखाः | लेखकाः | पृष्ठाङ्काः |
|---|---|---|---|
| १— | प्रियं श्रद्धे ददतः— | श्रद्धासूक्तात् ऋग्वेदात् १०।१५१।१-३ | १ |
| २— | श्रीशक्तिगीता— | भगवत्पूज्यपादाः— महर्षयः स्वामिनः ज्ञानानन्द गुरुवर्याः | २ |
| ३— | सम्पादकीयम्— संस्कृत-अकादमी समारोहः | | ३-४ |
| ४— | वचनशास्त्ररहस्यम्— | डॉ० एन्० एच० चन्द्रशेखरस्वामी | ४-६ |
| ५— | तन्त्रालोकः— | श्रीमन्महामहेश्वराचार्याः अभिनवगुप्तपादाः | ७-८ |
| ६— | साहित्यस्य भूमापृष्ठम्— | श्रीगिरीशदत्त पाण्डेयः | ९-१३ |
| ७— | मयूरः [ कविता ] | डॉ० परमहंस मिश्रः | —१३ |
| ८— | विद्वदनुग्रहः—[ पत्राणि ] | | २१-२४ |
| ९— | कर्ममीमांसादर्शनम्— | भगवत्पूज्यपादाः महर्षयः स्वामिनः ज्ञानानन्द गुरुवर्याः | —२४ |

---

# अखिलभारतीय संस्कृतकवि सम्मेलनम्

प्रयागस्थगंगानाथझाकेन्द्रीयसंस्कृतविद्यापीठे मार्चमासस्य सप्तमतारिकायां दिल्लीस्थराष्ट्रिय-संस्कृत संस्थानेन प्रवर्तितस्य संस्कृतसंस्कृतिवर्षस्याङ्गतयाऽखिलभारतीयं संस्कृतकविसम्मेलनमायोजितम्। तस्मिन् देश-स्यानेकशो भागतः सुप्रसिद्धैः कविभिर्भागो गृहीतः। वाराणसीतः समागतेष्वासन्-बटुकनाथ शास्त्रिखिस्ते-रति-नाथ झा-रेवाप्रसादद्विवेदि-प्रियव्रतशर्म-शिवदत्त-शर्मचतुर्वेदि श्री नारायणमिश्र-लीलाधरपन्त प्रभृतयः कवयः। नागपुरतः श्री श्रीधरभास्कर वर्णेकरः कानपुरतः नलिनी शुक्ला, वारंगलतः एस. बी. विजयसारथिः, गुडरतः नरसिंहाचार्युलुः, प्रयागतः त्रिविक्रमपतिः, चन्द्रभानुत्रिपाठी, प्रभातशास्त्री, केदारनाथमिश्रः, रामखुशी-त्रिपाठी दिल्लीतः रुद्रदेवत्रिपाठी च। सम्मेलनस्याध्यक्षयं निर्व्यूढं डा० वर्णेकरमहाशयैः। पूर्वं, श्रीमत्या मायामालवीयया स्वसहयोगिनीभ्यां साकं संगीतमयं मंगलाचरणं प्रस्तुतम्। विद्यापीठस्य प्राचार्येण डा० गया चरणत्रिपाठिना समुपस्थितानां कवीनां सहृदयानां च काव्यमयं स्वागतं व्याहृतम्। पूर्त्यर्थं प्रदत्ताः समस्या आसन्-'वाणी विल-सितम्' 'को विहातुं समर्थः' 'न हसितमहो नापि रुदितम्', 'संगमः'।

प्रयागविश्वविद्यालयस्य गणितविभागाध्यक्षाणां डा० त्रिविक्रमपतिमहोदयानां समस्यापूर्तिभिः कवि-सम्मेलनमारब्धम्। अनुपस्थितेन श्रीमता अमीरचन्द्रशास्त्रिणा प्रेषिताः समस्यापूर्तयः पठिताः।

सहृदयानां श्रोतॄणां काव्यश्रवणार्थमुपस्थित्याऽऽधुनिके युगे संस्कृतकवीन्प्रति सहजमाकर्षणं सम्मेलनप्रसंगे समनुभूयते स्म। संस्कृतकवयोऽपि वर्तमानां सामाजिकीं राजनैतिकीं वा स्थितिमवलम्ब्य कियन्मात्रं जागरूकास्त्व बिभ्रतीति तत्र स्फुटमाकलयितुं शक्यमासीद्। पूर्वं, प्रयागविश्वविद्यालयस्य गणितविभागाध्यक्षाणां डा० त्रिविक्रम-पतिमहाशयानां, को विहातुं समर्थः इति समस्यामाश्रित्य विहिताः पूर्तयः सहृदयान् चमदकुर्वन्। श्री विजय-सारथिभिः पठिता मन्दाकिनी काव्यस्यांशोऽपि पुष्कलं प्रभावमुदपादयत्। डॉ० हरिदत्तशर्मणां मधुरस्वरकलितेन काव्यपाठेन श्रीलीलाधरपन्तमहाशयानां वर्तमानस्य कुलपतिपदभाजां दनसा दयनीयां स्थिति मवलम्ब्य पठितेन

[ शेष भाग आवरणपृष्ठे ३ पे

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

५८ तमे वर्षे ] * वाराणसी * अप्रैल १९८१ * वैशाख २०३८ * [ अङ्कः-४

## प्रियं श्रद्धे ददतः

श्रद्धयाग्निः समिध्यते
श्रद्धयाहूयते हविः ।
श्रद्धां भगस्य मूर्धनि
वचसा वेदयामसि ॥

प्रियं श्रद्धे ददतः
प्रियं श्रद्धे दिदासतः ।
प्रियं भोजेषु यज्वस्विदं
म उदितं कृधि ॥

यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ।
एवं भोजेषु यज्वस्वस्माकमुदितं कृधि ॥ ३ ॥

पुरुषगतोऽभिलाषविशेषः श्रद्धा । तया श्रद्धया गार्हपत्यादिः अग्निः संदीप्यते । श्रद्धयैव आहवनीये हविः हूयते । ऐश्वर्यस्य शिरस्थाने वर्त्तमानां श्रद्धाख्याम् अग्न्यधिष्ठातृदेवतां वचसा अभिनन्दयामि ।

हे श्रद्धे ! ददतः यजमानस्य कल्याणं कुरु । यः दातुमाकांक्षते सोपि त्वयाऽनुगृहीतव्यः । श्रद्धा नामर्षिका निवेदयति यत् हे मातः श्रद्धे ! सर्वेषु त्वत्प्रसादभोक्तृषु भोगार्थिषु यज्ञदीक्षितेषु यजमानेषु त्वं महतीं 'दयां' कुरु ।

यथा प्राणप्रदेषूग्रेष्वसुरेषु देवाः श्रद्धामकुर्वन् तथैव श्रद्धावत्सु सर्वेषु भोक्तृषु भोगार्थिषु यष्टृषु यजमानेषु सुफलात्मकमनुग्रहं कुरु ।

# 卐 श्री शक्तिगीता 卐

भगवत्पूज्यपादा महर्षयः स्वामिनः ज्ञानानन्दगुरुवर्याः

[ शक्तिशक्तिमतोरभेदयोगवर्णनम् ]

असुरा अपि भो देवा वर्त्तन्ते मद्विभूतयः ।
अहमादिश्च सर्वेषां व्याप्ता चास्मि दिवौकसः ।।९७।।
सर्वत्र शक्तिरूपेण निखिलं तु चराचरम् ।
नित्याद्वैत—दशायान्तु शाश्वतं सुरसत्तमाः ।।९८।।

स्वस्वरूपे च मे देवा मच्छक्तिरवतिष्ठते ।
स्वरूपे स्वे च मे देवास्तुरीयाया ममैव हि ।।९९।।
शक्तेर्बलाद्धि जागर्ति सर्वदानुभवः किल ।
सच्चिदानन्दरूपस्य त्रिभावस्य न संशयः ।।१००।।

दशाऽद्वैतानुभूयेत मच्छक्त्यैव तुरीयया ।
तस्या एव तुरीयाया मच्छक्तेर्बलतः खलु ।।१०१।।
निर्विकल्प–समाधिस्थै—रात्मारामै—र्महात्मभिः ।
जीवन्मुक्तैः प्रतीयेऽहमाद्यन्त—रहिते विभौ ।।१०२।।

अद्वैते निर्विकारे हि स्वरूपे चिन्मये सुराः ।
ममैव विबुधा नूनं शक्तिः कारणरूपिणी ।।१०३।।
ब्रह्म–विष्णु–महेशानां जननी नात्र संशयः ।
मत्सूक्ष्मशक्तिरेवाहो दैवीं शक्तिः प्रयच्छति ।।१०४।।

पितृदेवर्षिवृन्देभ्यो नानादेवी स्वरूपिणी ।
जगत्स्थूलप्रपञ्चोऽयं स्थूलशक्तेर्ममैव हि ।।१०५।।
नानाभेदान् समाश्रित्य नानारूपेषु जायते ।
स्थूल–प्रपञ्चरूपं हि जगत् यस्य स्थ रक्षकाः ।।१०६।।
यूयं देवगणाः सर्वे स्थूलशक्तेर्ममैव च ।
परिणामस्वरूपं तज्जानीत सुरसत्तमाः ।।१०७।।

सम्पादकीयम्--

# संस्कृत--अकादमी--सारस्वत--समारोहः

संस्कृत अकादमी--उत्तर प्रदेश--लखनऊ द्वारा संचालितः सारस्वत-समारोहः मार्चमासस्य ११, १२, १३ दिनाङ्केषु तदनुसारं २०३७ वैक्रमाब्दे फाल्गुनशुक्लषष्ठीतः समारभ्य अष्टमीपर्यन्तं समपद्यत। महोत्सवस्य तस्योद्घाटनं माननीय-मुख्यमन्त्रिश्री विश्वनाथप्रताप सिंहमहोदय-करकमलद्वारा निश्चितमासीत् किन्तु विस्मयावहेन केनचिदाकस्मिकेन रुजाक्रान्तत्वात्तदनुपस्थितौ माननीयाभिः शिक्षामन्त्रि--श्रीमतीस्वरूपरानीबक्शीमहोदयाभिः सुसमुद्घाटितोऽयं समारोहः बहुप्रतीक्षानन्तरं स्वरूपमवाप।

समारोहस्य स्थानम् आसीत् 'रवीन्द्रालयः' लक्ष्मणपुर-स्थिता प्रथिता सांस्कृतिक-साहित्यिक-सामाजिकादिकार्य--क्रमाणां समायोजनसौविध्यसंहिता सुसज्जिता सुस्थली।

समारोहेऽस्मिन् प्रदेशस्य सुदूरभागादपि विश्रुतयशस्काः शास्त्रनिष्णाताः मनीषिणः विद्वांसः भागमगृह्णन्। दिनाङ्के ११-३-८१ दिवसे १० वादन वेलायां समारोहस्य उदघाटनमभूत्। उदघाटनभाषणे शिक्षामन्त्रिमहोदयाभिः संस्कृतस्यमहत्त्वम्, संस्कृत प्रसारप्रचारार्थैतादृशाणां समा--रोहाणां महत्त्वमित्यादिविषयानधिकृत्य स्वकीया विचारा अभिव्यक्ताः। तत्पश्चात्अकादमी-अध्यक्षैः श्रीमद्भिः करुणापतित्रिपाठिमहाभागैः कार्याधिक्यात् गमनोद्यतां शिक्षामन्त्रिमहाभागां सधन्यवादं व्यसर्जयत्।

समारोहे मुख्यमन्त्रिमहाभागानामनागमनेन शिक्षामन्त्रि-महाभागायाः आगत्यापि त्वरया प्रत्यावर्त्तनेन समारोह--श्रियः सौहित्ये किंचिदरुवारस्यमिव समजनि।

अनेन स्वयमेव सिद्धं यत्-निश्चप्रचम् एतादृशेषु समारोहेषु राजनीतिनिष्णातानां माहात्म्यम् उपेक्ष्यम्। राजनीतिज्ञाः आगत्यापि स्वकीयमेव व्यक्तित्वं ख्यापयितुं प्रयतन्ते। प्रतीयते यत् एते आगत्य विदुषः उपकृतान् कुर्वन्ति। चेत् अस्मद्देशीयः विदेशीयो वा कश्चिन्मनीषी अत्र आहूत अभविष्यत् तेन समारोहस्य, शास्त्रस्य शास्त्रज्ञवर्गस्य च समादर एवाभविष्यत्।

अकादमी--अध्यक्षाणां श्रीमतां करुणापति--त्रिपाठि--महाभागानामाध्यक्ष्ये ऽयमैतिहासिकः समारोहः स्वकीयं विशिष्टं महत्त्वमावहति। सहृदय शिरोमणयः श्रीमन्तः रमेशचन्द्र दूबे महोदयाः महन्मनोयोगेन सर्वाः व्यवस्थाः समपादयन्। सर्वेषां विदुषामावासस्य, अशनासनादिकस्य समग्रः प्रबन्धः सर्वथा सुखावहः सौविध्यसुदृढ आसीत्। सहायक-निदेशकेन डॉ० श्रीपति अवस्थी महोदयेन महत्या-ऽऽत्मीयतया सर्वेषां समागतानां विदुषां सभाजनमकारि।

समारोहे संस्कृतसाहित्यस्य सर्वासां विधानाम् अव्यवधानं सावधानं विधानं प्रादर्श्यत। क्रमशोऽन्तर्विद्यालयीयवादस्पर्धायाम् 'राष्ट्रीयैक्यसम्पादनाय संस्कृतमेवार्हति' इति विषयमाश्रित्य वादप्रतियोगिता सम्पन्ना। अस्यां स्पर्धायाम् मेधाविनां छात्राणां भाषणपाटवं सत्यं स्पृहणीयम् आसीत्।

रात्रौ वाराणसीस्थाभिनयभारती--संस्थया मुद्राराक्षसं नाटकस्याभिनयः प्रदर्शितः। प्रदर्शनम् अभिनय-दृष्टया, शास्त्रीयसिद्धान्त-दृष्ट्या सामाजिकानाम् आकर्षणदृष्टया च सर्वथा सहृदयहृदयावर्जकम् आसीत्।

१२-३-८१ दिनाङ्के वाराणसेयैरन्यतश्च समायातैः अदूष्यवैदूष्यैः विद्वद्वरेण्यैः व्याकरणे-वेदान्ते च परम्परागतः शास्त्रार्थः व्यधायि। अन्तर्विश्वविद्यालयीयसंस्कृतगीत-

स्पर्धायाः प्राक् चतुर्णां वेदानां सस्वरः पाठः श्रावितः। रात्रौ भातखण्डे संगीत महाविद्यालयात् समागतैः कलाकारैः सांस्कृतिकः कार्यक्रमः प्रस्तुतः।

समारोहस्य विशिष्टमाकर्षणमासीत् महत्वपूर्णं कवि॰ सम्मेलनम्। कविसम्मेलनमिदं गंगाप्रसादस्मारकभवने (अमीनाबादे) सम्पन्नम्। तत्रैव भरतनाटचशास्त्र-सम्मतमञ्चविधान विषयमाश्रित्य डॉ. रेवा प्रसाद द्विवेदिभिः वैदुष्य पूर्णं विवरणम् प्रस्तुतं, चित्राभिः रेखाकृतिभिस्तस्य समर्थनं च कृतम्। कविसम्मेलनस्य सञ्चालनमपि डाक्टर रेवा प्रसाद द्विवेदिमहोदयैः कृतम्।

एवं विधैः मुख्यैः कार्यक्रमैः संस्कृत--जगतः वर्त्तमानाः निखिलाः प्रवृत्तयः पूर्णतया तत्र प्रदर्शिताः त्रिदिवसात्मकेऽस्मिन् समारोहसन्दर्भे सर्वम् संस्कृतमयमिवैवासीदिति महत्शोभनं संवृत्तम्।

सत्यम् अकादमीनिदेशकाः संस्कृतप्राणाः संस्कृत-साहित्यसमुत्कर्षसन्धायकाः स्वकीयोत्तरदायित्वनिर्वाह-प्रबुद्धाः सन्ति येषां व्यवस्थायां निर्विघ्नतया ऐतिहासिकोऽयं समारोहः सम्पादितः।

सर्वतोत्कृष्टा च तत्र दृष्टा सुखावहा स्थितिः, यत् समारोहेषु प्रायः अतिथयः, आगन्तुकाः, विद्वांसः असन्तुष्टाः सन्तः विविधतया निन्दन्त्येव किन्तु समारोहेऽस्मिन् सुव्यवस्थानात् सर्वे प्रसन्नाः संतुष्टाश्चासन्।

कार्यक्रमान्ते सर्वेषां विदुषां कृते ये सुदूरात् समागता आसन्–सर्वेषां कृते नैमिषारण्य–यात्रायाश्च व्यवस्था कृता आसीद् अकादमी द्वारा! अनया व्यवस्थया तु व्यवस्थासु ज्योत्स्नाप्रसार इवैवाभूत्। प्राचीनोपवनविहारिषु तपस्विषु तत्रत्यं यदाकर्षणमासीत् तदेव सर्वेषां विदुषां मनःसु समुदितमिव प्रत्यभात्। कुटीरेषु कुटीरेषु गत्वा विद्वद्भिः किमप्यव्यक्तमेवाकलितम्। ऋषिकल्पैः श्रीमद्भिः स्वनाम–धन्यैः नारदानन्दस्वामिभिः स्वकीये प्रवचने भारतीयता एव मुखरीकृता।

निष्कर्षतः सर्वोऽयं समारोहक्रमः नितान्तमाकर्षण-रूषितः अभवत्। एतादृग्भिः समारोहैः साहित्यस्य सौहित्यं वैश्वात्म्यमेवात्मसात्करोतीति सूर्योदयः अकादमी सञ्चालकान् अधिकारिणः कर्मचारिणश्च साधुवादसुधयाभिषेचयतीति शम्।

# वचनशास्त्र रहस्यम्

श्री एन्० एच् चन्द्रशेखरस्वामी,

सम्पूर्णानन्द संस्कृत विश्व विद्यालयः

कर्नाटकप्रदेशे वीरशैवसम्प्रदाये ये सन्तपदवाच्याः शरणशिवयोगिनः स्वात्मानुभवनिष्यन्दपीयूषरससामरस्यरसिकाः आसन्, ते स्वकीयायाम् भाषायाम् स्वात्मानुभूति-भव्यतां प्रादुर्भावयामासुः। एते शरण–पदवाच्याः शिवयोगिनः वीरशैवसम्प्रदाय–दीक्षिताः खीष्टाब्दस्य एकादश–द्वादशशतके प्रादुरभूवन्। एतेषु बहवः शरणपदवाच्याः मनीषिणः कवयोऽप्यभूवन्। तेषां कविता भक्तिरसभूयिष्ठा वाणी आसीत्। सा एव वाणी वचन शब्दैरद्यापि परिचीयते।

वचनकारेषु सर्वप्रथमः जेडरदासिमय्यः मनीषी देशविश्रुतः आसीत्। अन्ये ये वचनकारा आसन् तेषु प्रभुदेवः चेन्नबसवः, बसवः, अक्कमहादेवी सिद्धरामेश्वरश्चप्रमुखाः आसन्।

प्रस्तुते लेखे येषां वचनानां भावानुवादः विद्धद्वरेण्येन स्वामिना प्रस्तूयते तानि वचनानि संग्रहरूपाणि सन्ति। अनेन सिद्धयति यत् वचनकाराः शैवागमसिद्धान्तप्रभाव-भाविताः आसन्। अनेनानुवादेन संस्कृते जगति वचनकाराणां सन्दर्भः सर्वप्रथमं सन्दृभ्यते। अतः लेखकः श्रीमान् चन्द्रशेखरस्वामी साधुवादार्हः।

[ सम्पादकः ]

त्रैकालिकं परिवर्तनरहितं यत् स्वरूपं तदेव अबाधितं सत्यं तत्त्वम्। तदेव रूपं चैतन्यरूपत्वात् चित् इति कथ्यते अथवा तस्यैव परमात्मा इत्यपि संज्ञा। इन्द्रिय-प्रत्यक्ष-स्वभावानां सर्वेषां पदार्थानां स्वभाव एव तावत् परिवर्तनशीलत्वम्। एतेषां सर्वेषामाद्यं रूपं सत् तत्त्वम्। तेषाम् आश्रय आश्रयभावत्वात् न कदापि सतः बाधकं वर्तते कुत्रापि। नैव तस्य रूपं ज्ञातुं शक्यते बुध्यापि। समाधिबलात् यदा चित्तलयावस्था प्राप्यते तदा अनुभूयते--एक रसत्वम्। स्वसंविदवस्थायां स्फुरितां कल्पनां, तदनन्तरं व्युत्थाने बहुप्रकारेण वर्णयन्ति अनुभवकोविदाः। तदेव सत्यस्वरूपस्य वर्णनम् स्वानुभूतं मन्यते।

एवमेव वर्णितं परमात्मनः स्वरूपमेव सत्यस्वरूपमिति वचकाराणानां राद्धान्तः। वर्णितुमशक्यत्वात् अवर्णनीयत्वम्, अनिर्वचनीयत्वाच्च अतएव वाङ्मनसः तत्रअगोचरत्वमपि कथ्यते। वागतीतं सत्यस्वरूपं नामरूपगुणातीतं च अस्माकमवबोधः, तस्य साम्यमिति, वर्णितुं न पार्यते। अतएव सर्वे वचकारा अखण्ड स्वरूपस्य वर्णनं निर्वचनंच कुर्वन्ति।

परात्पर–सत्यस्वरूपम्--

बयलु (आकाशः) निर्बयलु (चिदाकाशः) चिद्घनः शून्य इत्यादिनामभिः वचनशास्त्रे उल्लखितं वर्तते। एते सर्वे शब्दाः अन्वर्थकाः इति वक्तुं शक्यते। एतस्य स्वरूपस्य अवर्णनीयत्वेऽपि अनुभव-गोचरत्वं स्वीक्रियते योगिभिः तत्वविद्भिश्च।

"निरवयव -शून्यलिङ्ग--मूर्तेः रहस्यं इत्थं वर्तते। स साकारोऽपिनास्ति निराकारोऽपि नास्ति। तस्य आदिः अन्तश्च नास्ति। स युक्तोऽप्ययुक्तइव, न सुखी, न दुःखी, निरवयवः शून्यमूर्तिः न कर्ता, न भृत्यः न कार्यकारणप्रभावितः ......द्वन्द्वरहितः प्रकाशः—स एव गुहेश्वरलिङ्ग--पदवाच्यः"

कालकल्पनायाः अपेक्षां विना त्वं स्वयमेव स्फुरितः, परमानन्द प्रभावे चिरकालादेव स्थितोऽसि। स्वकीयमादिमन्तश्च जानासि, स्वकीयं भावाभावं–स्वयमेव जानासि। यद्यपि सम्यग्रूपेण शिवस्य स्वरूपं जानामि, तदपि वक्तुं न शक्यते। स्वयमेव घनस्वरूपत्वात् चन्नमल्लिकार्जुन ! त्वं क्रियाभिः स्प्रष्टुं न शक्यसे, कथमहं तव स्तोत्रं कर्तुं शक्नोमि। कथमहं त्वं प्रत्यक्षं हस्ते स्थापयिष्यामि। अयि चन्नमल्लिकार्जुन देव ! त्वां संविद्दृष्ट्या दृष्ट्वा कथमहम् आश्चर्य चकितः अवेदम्।

'स्वयं भूस्त्वं पितरं स्वयमेव जगत् सृष्ट्वा स्वयमेव जगत् सृष्ट्वा स्वयमेव विकसितः भवसि। स्वयमेव तृप्तोऽसि,। भेदकेषु अभेदरूपोसि। स्वचारित्र्यं स्वतः सहजतया प्रकटयसि।"

कुम्भेषु कुम्भेषु प्रतिबिम्बितः सूर्यः एक एव भवति। सकल देहेषु प्रतिबिम्बितः शिवोऽप्येक एव। तदतिरिक्तं नान्यत् किंचिद् दृश्यते। अखण्डईश्वरः एव सर्वदा सार्वात्म्येन दृश्यते।

निजं वस्तु एकमेव। स्वयं लीलाकुलत्वात् तद् द्विधा भवति किन्तु अज्ञान-वशात् अहमन्यः इति प्रार्थक्यप्रथया प्रथितः प्रतिभाति यदा अभेद ज्ञानं भवति तदा स्वयमेव शिवः चिम्मलगेय चेन्नरामः।

(बयलु) आकाशे आकाशस्य मिलने क्षिति-जल-प्रदेशे कीदृशी सीमा वर्तते ? क्षीरे क्षीरमिश्रणे व्यतिरिक्तत्वमिति

कथं वक्तुं शक्यते। स्वात्मनि प्राप्त-तादात्म्यस्य पार्थक्यम् कथम् अखण्डेश्वर तत्वं सर्वथा अशक्यमसम्भवम् अस्ति।

आद्यनादिसत्वस्वरूपाविर्भावात् प्राक् नामरूपेभ्यः प्राक् शून्याशून्येभ्यः प्राक्, सचराचरसंरचनात् प्राक्, त्वमेव गुह्येश्वरपदवाच्यः शिवः। त्वमेवाव्यक्तरूपेण सर्वं व्याप्नोषि।

पञ्चतत्त्वस्वायत्तीकरणानन्तरं यदा महाकाशे स्थित्वा यदि चिन्तनं क्रियते तदा सर्व शून्य निरालम्ब स्वरूपस्य (बयलु) नामधेयस्य आकाशस्य दर्शनं भवति। तस्यैव तादात्म्योपलब्धये प्रयतमानः सर्वेषां बसवप्रभृतीनां सिद्ध-भक्तानां मनीषिणां पूर्वपुरुषाणां शिवगणानां कृपापूर्णेन साहाय्येन भगवद्गणरूपोऽहं शिवसामरस्यमवाप्तवान्।

'उरिलिङ्गपेद्दिदेव' इत्थं प्रतिपादयति-शक्ति-साहाय्येन जगत् विरचितम्; किन्तु परमेश्वरः स्वतः निर्लिप्तः निरञ्जन-रूप एव तिष्ठति।

शिवः स्वयम् जगद्रूपतामेत्यपि नैत्यपि। सः रूपवा-नपि रूपरहितोऽपि। सर्वरूपतामायत्तीकर्त्तुं सः सर्वथा प्रभवति। सः सर्वाकारनिराकारोभयभव्यतां स्वीकर्त्तुं शक्नोत्यपि, नापि शक्नोति।

शिवः कोटि-कोटि-ब्रह्माण्डानि निर्मातुं विधातुं समर्थः। स्वातन्त्र्यात्। इदं स्वयंसिद्धं तत्वं यत् सः सर्वशक्तिमान्, व्यापकः, परमेश्वरः कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः। जगद्रूपं धारयित्वा विश्वरूपोऽपि स्वयं विश्वोत्तीर्णोऽपि भवति।

हाविनहालकल्लेदेवः शक्तेः स्वरूपमित्थं वर्णयति—बयलु आकाश एव एकस्मिन् मेघान् सृष्टवा, वर्षां कृत्वा तादात्म्यं प्राप्य उपल (Hails) इत्यात्मना समुल्लसति। स्वात्मसंकल्पादेव शक्तिः प्रादुरभवत् द्वयोः सामरस्य भावस्यैव अखण्डात्मताव्यपदेशः।

यावत् आन्तरोऽपि नास्ति यावत् यदा आदि अन्त्योऽपि नास्ति, तदा किमपि परोऽपि नासीदिति। दश दिशानां बोधात् प्राक्, विश्व प्रमाणस्यापि आविर्भाव-रूमयात् प्राक्, स्थावरात्म तत्वानांप्रागपि आधारकर्ता इत्यादयोऽपि नामानि यदा नासन्,-तदा सर्व शून्यः नेति नेति यत् श्रुति-वाक्यं तदेव शून्य-रूपेण वर्णितं वचनकारेण निरालम्बः स्वरूपः सः विलसितवान् महालिङ्ग गुरु शिव सिद्धेश्वर-प्रभुः।

पृथिव्याकाशयोराविर्भावात् प्राक्। त्रिभुवनाविर्भावात् प्राक्, होम-जप तपादिक्रियाणां प्रथमतः भवानस्ति। कः जानाति भवन्तम् ? हरि हर ब्रह्मादीनामप्यगोचरः, निर्लेपः निरञ्जनः, वेदेभ्यो प्यगम्यः, शास्त्रस्मृतिभिरप्यबोध्यमानः। आकाश-कुसुम-सौरभ्य सदृशमसुगन्धवत् तव स्वरूपम्। तव रहस्यं न कोऽपि जानाति। कल्पनातीतं तव स्वरूप-मित्यर्थः।

यदा आदिः अनादि इत्यपि नासीत्, अजाण्ड ब्रह्माण्ड-मपि नासीत्, स्वयमेव नाद-बिन्दु-कलातीतः नामरूप क्रिया-तीतः, सचराचर रचनायाः प्राक् स्वयमेव अखण्डः परिपूर्णः अप्रमाणः अगम्यः अगोचरः स्वस्वरूपः महाधनः चैतन्यरूप लिङ्गः अप्रमाणः कूडलसंगमदेवः। अल्लम प्रभुदेवः शिवस्य स्वरूपवर्णनमसाध्य मिति सिद्धराम-योगिनं प्रति कथयति। प्रमेयसाक्षात् कर्ता सामान्य-जनानां दृष्ट्या शून्यमिव यद् भाति तत्वं तदेवाव्यक्तं सनातनं द्वन्द्वातीतं तत्वमगोचर-गम्य तत्त्वमिति वावर्ण्यन्ते वचनकाराः। केवलमाकाश-रूपमज्ञेय-तत्वं स्वयंभूः इति बहुषु वचनेषु प्रतिपादितं दृश्यते।

वचनकारैरेकत्र प्रसङ्गानुसारेण तत्तत्वं पुरुषवाचकत्वेन अन्यत्र चिन्मात्ररूपमिति वर्णितम्। तत्त्वम् तद्-एतद पुनश्च-त्वम्-यूयम् इत्यादिपदैः यथावसरं सम्बोधितम्। तत् अहं पद-वाचकः स्वयमेव सर्वपदवाच्योऽपि स्फुरति। स एव दिव्यशक्तिसम्पन्नः व्यक्तः परमशिव इत्यप्य-भिधीयते।

# तन्त्रालोकः

श्रीमन्महामहेश्वराचार्याभिनवगुप्तपादविरचितः

[ जयरथकृतविवेकाभिख्यव्याख्योपेतः ]

तेन यथा मन्वादिस्मृतौ उत्सन्न--शाखामूलत्वा-दष्टकादियागानां मूलभूता श्रुतिः कल्प्यते तथा इहापि ज्ञेयम् । नह्येवंविधां श्रुतिमदृष्ट्वा साक्षात्कृत--निखिलशैवागमसतत्त्वास्त एवमुपदिशेयुः इत्यलं महागुरूणा-मुपदेशपरीक्षण दुःशिक्षया ! ननु शास्त्राणां —

'यतः शिवोद्भवाः सर्वे शिवधामफलप्रदाः ।'

इत्याद्युक्तेरेकत्वनियामककारणफलयोरैक्यमस्ति, इह किंनिबन्धनमेषामेवं नानात्वमुक्तं ? सत्यं–किन्तु अनुग्रा-ह्याशयभेदादेषां नानात्वं कल्पितम् । यदुक्तं

'सर्वमेतत्प्रवृत्त्यर्थं श्रोतॄणां तु विभेदतः ।
अर्थभेदात्तु भेदोऽयमुपचारात्प्रकल्प्यते ।।
फलभेदो न कल्प्योऽत्र कल्प्यश्चेदयथायथम् ।'

इति । ननु यद्येवं तत्

'वेदादिभ्यः परं शैवं शैवाद्वामं च दक्षिणम् ।
दक्षिणाच्च परं कौलं कौलात्परतरं नहि ।।'

इत्यादिना उक्तमेषां यथायथमुत्कृष्टत्वं युक्तं न स्यात्, ? नैतत्--द्वारद्वारिभावेन एषामुपायोपेयभावस्य उक्तत्वात्, तेन परमाद्वयोपदेशप्रतिपादकमेव शास्त्रं शिव-सद्भावलाभैकफलम्--इत्यवसेयम् । तदेव परमपदप्राप्तौ साक्षादुपायभूतत्वादुत्कृष्टम् । एतच्चानेनैव श्रीमालिनीश्लोक-वार्तिकादौ वितत्य उक्तं, तत्तत एव स्वयमवधार्यम्, ग्रन्थ-गौरवभयात्तु प्रतिपदं न संवादितम् । अत एवाह 'तत्सारं त्रिकशास्त्रम्' इति । तदुक्तं

'वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम् ।
ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम् '।।

इति । अनेनैवाशयेन च

'वाममार्गाभिषिक्तोऽपि दैशिकः परतत्त्ववित् ।
संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः ।।

इत्यादि श्रीनिशाचारादावुक्तम् । तच्च सिद्धा-नामक-मालिन्याख्यखण्डत्रयात्मकत्वात्त्रिविधम् । तत्र क्रिया प्रधानं सिद्धातन्त्रं, ज्ञानप्रधानं नामकं तन्त्रं, तदुभयमयं मालिनी-मतम् इति तदेव मुख्यम्, यदाह 'तत्सारं मालिनीमतम्' इति । एवं च, 'न तदस्तीह यन्न' इत्यादि युक्त-मेवोक्तम् ।। १८।।

अतश्च सर्वसहत्वात्तदधिकारेणैव च प्रतिज्ञाया अपि निर्वाहो युक्त इत्याह--

अतोऽत्रान्तर्गतं सर्वं संप्रदायोज्झितैर्बुधैः ।
अदृष्टं प्रकटीकुर्मो गुरुनाथाज्ञया वयम् ।।१९।।

'अत' इति उक्तयुक्त्यास्यैव शास्त्रस्य प्राधान्यात् । 'प्रकटीकुर्म' इति प्रक्रियाकरणेन । अतश्च 'प्रधाने हि कृतो यत्नः फलवान्भवति' इति भावः । 'गुरुनाथाज्ञया' इति–नहि तदाज्ञां विनात्र अधिकार एव भवेदिति भावः ।।१९।।

अन्यादृष्टप्रकटीकरणे च स्वात्मनि भगवत्प्रसाद एव निमित्तम् इति दर्शयितुमाह--

अभिनवगुप्तस्य कृतिः
सेयं यस्योदिता गुरुभिराख्या ।
त्रिनयनचरणसरोरुह—
चिन्तनलब्धप्रसिद्धिरिति ।।२०।।

. त्रिनयनप्रसादासादितप्रकृष्टसिद्धेः किं नामासाध्यम् इति भावः ॥ २० ॥

एवं चेयं कृतिः सर्वेषां ग्राह्या भवेत्, इति प्रतिपादयितुमाह

श्री शम्भुनाथभास्कर-
चरणनिपातप्रभापगतसंकोचम् ।
अभिनवगुप्तहृदम्बुज-
मेतद्विचिनुत महेशपूजनहेतोः ॥ २१ ॥

आदिवाक्यं

हृदयं शास्त्रात्मसतत्त्वं महेश्वरस्य पूजनं

'पूजा नाम न पुष्पाद्यैर्या मतिः क्रियते दृढा ।
निर्विकल्पे महाव्योम्नि सा पूजा ह्यादराल्लयः ॥'

इत्याद्युक्त्या तत्तद्वक्ष्यमाणज्ञप्तिक्रमेण स्वात्मतया प्रत्यभिज्ञानम् । अतश्च महावाक्यार्थेन एकमेवादिवाक्यात्मकं वाक्यम् इति दर्शयितुमाह 'आदिवाक्यम्' इति ।

इह यद्यपि परमेश्वरशक्तिपातमन्तरेण तच्छास्त्रश्रवणादावन्यत् प्रवृत्तिनिमित्तं नाभ्युपेयते, तथापि शास्त्रकाराणामियं शैली—इत्यभिधेयप्रयोजनादि प्रतिपादयितुं प्रवृत्तिहेतुतया अयमादिवाक्योपनिबन्धः । तत्र प्रथमश्लोकपञ्चकासूत्रितोऽनुत्तरषडर्धार्थक्रम इत्यनेन साक्षादभिहितश्च परापरापरापरात्मतादिना बहुप्रकारस्त्रिकार्थस्तावदभिधेयः तस्यैव च कर्तृप्रतिपादनकौशलेन मौलागमस्य च समस्तशास्त्रप्राधान्याभिधानेन सातिशयत्वं प्रतिपादयितुं 'श्री भट्टनाथ' इत्यादि श्लोकपञ्चकमुपात्तम् । स च गुरुपरम्परागतः

'तस्माद्गुरुक्रमायातं दिशन्नेति परं शिवम् ।'

इत्याद्युक्तनीत्या निजप्रयोजनकारी भवति, इत्येतदङ्गतयैव पारम्पर्यसंदर्शनार्थं गुरुसंकीर्तनपरं श्लोकसप्तकमुट्टङ्कितम् । अतश्चास्यैव वक्ष्यमाणोपायक्रमेण स्वात्मतया प्रत्यभिज्ञानाज्जीवन्मुक्तिप्रदत्वं प्रयोजनं श्लोकान्तरासूत्रितमपि 'श्रीशम्भुनाथ' इत्यादिश्लोकेन साक्षादुक्तम् । एतदुद्दिश्य चको नाम न सचेताः परमेश्वरशक्तिपातपवित्रितः प्रवर्तते इत्यस्य प्रवृत्तिनिमित्तत्वं, प्रवृत्तस्याप्येतदुपलब्धौ—

'तमनित्येषु भोगेषु योजयन्ति विनायकाः ।'

इत्याद्युक्तेर्विघ्नाः संभवन्ति इत्येतन्निरासाय गणेशबटुकयोः स्तुतिः । 'अर्थितो रचये' इति प्रतिज्ञातायाः प्रक्रियायाश्च—

'तन्मया तन्यते तन्त्रालोकनाम्न्यत्र शासने ।'

इत्यादिवक्ष्यमाणोपजीवनेन तन्त्रालोक इत्यभिधानम् । एवमभिधानाभिधेययोरभिधेयप्रयोजनयोश्च वाच्यवाचकसाध्यसाधनभावलक्षणः संबन्धश्चार्थाक्षिप्तः इत्यनेकवाक्यसंमेलनात्मकमेकमेवादिवाक्यं प्रवृत्तिहेतुतया उक्तम् इति पिण्डार्थः ॥ २१ ॥

इह यद्यपि सर्ववादिनां मोक्ष एव उपादेयः, तत्प्रतिपक्षभूतः संसारश्च हेयः, तस्य च मिथ्याज्ञानं निमित्तं, तत्प्रतिकूलं च तत्वज्ञानम्—इति तत्साक्षात्कारेणैव अज्ञानापगमान्मोक्षावाप्तिः इत्यत्राविवादः, तथापि तैस्तदेकनियतं ज्ञानाज्ञानयोः स्वरूपं न ज्ञातम् इति

'भ्रमयत्येव तान्माया ह्यमोक्षे मोक्षलिप्सया ।'

इत्याद्युक्त्या तदभ्युपगतो मोक्षो मोक्ष एव न भवति—इति दर्शयितुं शास्त्रान्तरवैलक्षण्येन तत्परीक्षणस्य वक्ष्यमाणत्वात्प्राधान्यमपि कटाक्षयितुमुपक्रम एव बन्धमोक्षपरीक्षामुट्टङ्कयति ग्रन्थकारः—

इह तावत्समस्तेषु शास्त्रेषु परिगीयते ।
अज्ञानं संसृतेर्हेतुर्ज्ञानं मोक्षैककारणम् ॥२२॥

न चैतदस्माभिः स्वोपज्ञमेवोक्तम्—इत्याह—

मलमज्ञानमिच्छन्ति संसाराङ्कुरकारणम् ।
इति प्रोक्तं तथा च श्रीमालिनीविजयोत्तरे ॥२३॥

—क्रमशः

# साहित्यस्य भूमापृष्ठम्

**श्रीगिरीशदत्तपाण्डेयः**

अनुसन्धाता सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

उद्गीथप्रणवोद्गीथ– सर्ववागीश्वरेश्वरी ।
शंदधा शंददा घोरा तारिणी विशताज्जयम् ॥

स्वानुपजीविप्रमाणाप्रयोज्यज्ञानविषयत्वसामान्याभाववत्त्वे सति "सकलपुमर्थसाधनार्थविषयकज्ञानसाधनत्वं शास्त्रत्वम्"। रसास्वादमुखपिण्डदानद्वारा रामादिवद् वर्तितव्यम्, न रावणादिवदिति प्रवृत्तिनिवृत्तिकारित्वात्, तुल्येऽपि पुनरुक्तिदोषे, जघनकाञ्चीति दुष्टं न कर्णावतंसादिपदमित्यादिशासनात् तत्साहित्यस्य शास्त्रत्वमव्याहतम् ।

'नानृषिः कविः[1]' इति भट्टतौतवचनात् स्मर्त्ता कविः । लोकप्रसिद्धस्य सीताचरितमहाकाव्यस्य, आम्नायार्थरसगर्भनिर्भरस्य शान्तिरिव रुद्रस्य महाभारतस्य, शुकमुखादमृतद्रवसंयुतनिगमकल्पतरोर्गलितफलस्य भागवतस्य, अन्येषामपि ख्यातादर्शलोकवृत्तानां गाथादीनां काव्योपजीव्यत्वम् । विद्याव्याकरणकोशच्छन्दोऽलङ्कारकलोपकलासु कविसन्निधिदेशव्यवहृतिविद्वद्वरिष्ठगोष्ठीसूक्तिमहाकविनिबन्धादीनां काव्ययोनित्वमिति काव्यमीमांसकाचार्यराजशेखरमतम् । काव्याङ्गतयैवास्यापि शास्त्रस्य फलवत्त्वमिति विश्वनाथेनोक्तत्वाद् भवतु नाम काव्याङ्गत्वम्, मीमांसापरिशिष्टत्वं वा, व्याकरणपरिशिष्टत्वं वेत्यादिकथनं तु मूलाज्ञानविजृम्भितमेव ।

शास्त्राख्यानकाव्यमिति त्रिविधं वाङ्मयं पुनः प्रभु-सुहृत्-कान्तासम्मितभेदात् त्रिविधम् । वेदस्य प्रभोः शब्दप्रधानत्वमलङ्घनीयाज्ञत्वमनिष्टानुबन्धकरणकविधेयबोधक–विधिप्रयोजकत्वम् , तच्च नित्यकर्मविधायके वेदादिशास्त्रे साधारणो धर्मः । नित्याग्निहोत्रादीनामकरणस्यानिष्टसाधनत्वेन तथाविधाग्निहोत्रादिकर्त्तव्यत्वबोधकविधिवाक्यादिघटितत्वाद् वेदस्यैव प्रभुसम्मितत्वम् । अर्थवादोपबृंहितफलप्रशंसाद्वारा कर्त्तव्यबोधकवेदस्मृतीतिहासपुराणभागानां सुहृत्सम्मितत्वम् । सुहृदोऽर्थतात्पर्यकत्वं पुरुषार्थसाधनताज्ञानप्रवृत्तितात्पर्यकवाक्यप्रयोजकत्वम् ।

शब्दार्थोभयप्रधानं शास्त्रं काव्यमिति महिमभट्टमतम् । 'द्वयोर्गुणत्वे व्यापारप्राधान्ये काव्यधीः[2]' इति भट्टनायकाचार्याः । तदनुसारेणैव वैयाकरणमतानुयायिभिः साहित्याचार्यैः रसबोधौपयिकसाहित्याख्यकविलक्षणव्यापारस्यैव प्राधान्यात् काव्यतेति स्वीकृतम् । भामहाचार्यास्तु 'शब्दार्थयोःसाहित्यं काव्यम्'; इष्टार्थव्यवच्छिन्ना पदावली काव्यम्' इति च दण्डिनः । शास्त्रात् काव्यस्य भेदमुपदिशद्भिर्व्यासकृष्णद्वैपायनचरणैस्त्वाग्नेयपुराणसंहितायाम् ।

ध्वनिर्वर्णाः पदं वाक्यमित्येतद् वाङ्मयं मतम् ।
शास्त्रे शब्दप्रधानत्वमितिहासेषु निष्ठता ॥
शास्त्रेतिहासवाक्यानां त्रयं यत्र समाप्यते ।
अभिधायाः प्रधानत्वात् काव्यं ताभ्यां विभिद्यते ॥
अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम् ।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिश्च विन्दति ॥
वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम् ।
अपृथग्यत्ननिर्वर्त्यं वाग्वक्रिम्नि रसाद्वपुः ॥

---

१—का० मी० टी० पृ० ५८ । २—ध्वन्यालोकलोचनम् , प्र० उ० पृ० ८६ ।

तमसा मरुताप्यन्यैर्विभावैरतिनिर्भरैः ।
सर्ववृत्तिप्रवृत्तञ्च सर्वभावप्रभावितम् ॥
सर्वरीतिरसैः पुष्टं जुष्टं गुणविभूषणैः ।
अत एव महाकाव्यं तत्कर्त्ता च महाकविः[१] ॥ इति ।

'रस आत्मा ययोस्तयोर्वाच्यवाचकव्यञ्जकव्यङ्ग्ययोः परस्परोत्कर्षजननद्वारा सहृदयहृदयाह्लादजनकत्वे सति कविविवक्षितार्थक प्रतिपादकताविशिष्टशब्दस्य रसपरिस्पन्दरमणीयार्थस्य च दोषाभाव-गुणालङ्काररसादिसंयुक्तत्वे सति शोभाजनकत्वं सौन्दर्यं लावण्यमेव वा काव्यकायस्य जीवितमिति निर्विचिकित्सः सिद्धान्तः'' इति च विद्यागुरवः । काव्यप्रकाशः, साहित्यदर्पणम्, रसगङ्गाधरः इति ग्रन्थसंज्ञास्वारस्यमाकलय्य 'रस-काव्य-साहित्य' शब्दानां शक्यतावच्छेदकैक्यं सत्यपि विपरीतानुपूर्वीकत्वे न दुष्यति ।

नाट्यशास्त्रे दृश्यानामिव श्रव्यानामपि काव्याङ्गानां रससिद्धान्तस्य च निरूपणादर्शनात्, 'चत्वारि शृङ्गाः[२]' इत्यस्या ऋचः काव्यशरीरपरभाष्योपलम्भात्, 'रसो वै सः यं लब्ध्वाऽऽनन्दी भवति'[३] इति वेदान्तश्रुतिभाष्यावलम्बनादेवाखिलमपि 'साहित्यशास्त्रम्' श्रौतं स्मार्त्तं पौराणिकमैतिहासिकं वैज्ञानिकञ्च सिध्यति । राजशेखरसमाम्नातायाः साहित्यविद्यायाः परम्परायां परिगणितानामाचार्याणां कौटल्य-वात्स्यायनादिग्रन्थेषूल्लेखदर्शनात् परमप्रामाणिकत्वम् ।

संस्कृतकाव्यानामुद्भवो विकासश्च', साहित्यसम्प्रदायमीमांसा,' 'शास्त्रेषु लोकप्रामाण्यं न्यायस्वरूपविमर्शश्च' इति शोधपत्राणि सारस्वत्यां सुषमायाम्' 'विश्वसंस्कृतम्' इति प्रख्यातानुसन्धानपत्रिकायाञ्च सर्वं यथामति चिन्तितं प्राकाश्यमानीतम् ।

दण्डिभामहानन्दवर्धनाचार्येभ्योऽपि प्राग्वर्त्तिनां यास्कादिसमानभाविनां भागुरिप्रभृतीनामाचार्याणां विवरणानि 'संस्कृतव्याकरणशास्त्र का इतिहास' इति ग्रन्थे युधिष्ठिरमीमांसकमहाशयैर्निपुणमुपात्तानि । भरतमुनिमारभ्य श्रीकरपात्रस्वामिपर्यन्ता नाट्यशास्त्राद् भक्तिरसार्णवान्ता परम्परा अविच्छिन्नैवेति प्रत्यक्षमेव शास्त्रेतिहासविद्याविलासप्रतिभासपवित्रितविद्वद्विपश्चिमानां पुरस्तात् ।

काव्यालङ्कारे ध्वन्यपोहस्फोटवादानां खण्डनानि विद्यन्ते । भामहाचार्यैरिदं प्रथमतया अपोहवादप्रत्याख्यानस्य रुचिरा सरणिरुद्भाविता, वर्णनित्यतावादश्चाभ्युपगतः । स्फोटवादस्तु 'अवङ् स्फोटायनस्य' इति श्रीपाणिनिमुनिपूजितस्फोटायनाचार्योपज्ञः । तत्खण्डनान्यपि प्राचीनान्येव । वर्णनित्यतावादिना भामहेन ध्वनिसिद्धान्तखण्डनं महाभाष्यावलम्बनादेव कृतमिति युक्तमिति युक्तमुत्पश्यामः । पूर्वपक्षरूपेण तत्र ध्वनि-स्फोटापोहप्रभृतिवादानां बीजानि यत्र तत्र विद्यन्ते ।

आनन्दवर्धनःस्फोटवादमूलकमेव ध्वनिवादं विवृण्वन् रसादिध्वनिवादं सिद्धान्तितवान् । प्रतीयमानासंलक्ष्यक्रमव्यङ्ग्यानामेव काव्यात्मत्वम्, वस्त्वलङ्कारध्वन्यो रसध्वनिपर्यवसायित्वञ्च प्रतिष्ठाप्य वाच्यप्रतीयमानयोरुभयोरप्यर्थयोः सहृदयश्लाघ्यत्वम्, परस्परोत्कर्षजननद्वाराङ्गिरसव्यञ्जकत्वम्, रसाद्यानुगुण्येनैव शब्दार्थगुणालङ्काररीतिवृत्तिप्रवृत्त्यौचित्यविनिवेशप्रक्रियासम्प्रसाधिता तेनैव ध्वनिप्रस्थापनपरमाचार्येण । अर्थानामपि व्यञ्जकत्वं व्यङ्ग्यत्वञ्चेति नव्यसाहित्यसिद्धान्तनिष्कर्षः ।

साधारणीकृतविभावादिपरामर्श एव काव्यशब्दस्य व्यापारः । शक्तिमत्त्वमर्थवत्त्वम् । विशिष्टार्थप्रतिपादकः शब्दः काव्यम् । वैशिष्ट्यञ्च धर्ममुखेन, व्यङ्ग्यमुखेन,

१ --अग्निपुराणे ३३७।२--३३ पर्यन्ततः साभिप्रायमुद्धृतम् ।
२--शु० यजु० सं०--१७।९१। ३--तै० उ०--२।७।१ ।

व्यापारमुखेन वेति क्षोदनीयमतिगहनगहनमिति नेह प्रपञ्च्यते निबन्धविस्तरभयात् ।

प्रकटत्वमभिव्यक्तिरिति[1] भगवानस्मत्पूर्वपुरुषो पाराशर्यो व्यासः । श्रुतिराक्षेप इत्यपि'[2] इति च । अयमेवाभिव्यक्तिवादो वैदिकसिद्धान्तसिद्धः । अत एवास्य काव्यात्मत्वेनाभिमतस्य ध्वनेस्तत्त्वं महाभारतादि-रामायणादिप्रामाण्यात् प्रसाधितम् , परक्रियारूपैकनायकवती सीतारामचरितावली, पुराकल्परूपानेकनायकवती कुरुकुल वृत्तार्थदर्शिनो शतसहस्रारिणो महाभारता भारतसंहिता, शुकमुखादमृतद्रवसयुक्तनिगमकल्पतरोर्गलितफलमयी श्रीमद्भागवती संहिता च करुण-शान्त-भागवतरसप्रधानाः

'पूर्वपूर्वोपमर्द्दपूर्वकमुत्तरोत्तरो विकासः प्रगतिरिति पाश्चात्याः । काव्य-सौन्दर्य-साहित्यशास्त्रप्रवर्त्तकाः प्लेटो-अरस्तूप्रभृतयो दार्शनिकाः स्वबुद्धिविशेषविलासकैलाशचारिणः, अन्येऽपि क्रोचेप्रभृतयो विद्वांसो यथामति साहित्यशास्त्रीयस्वरूपसिद्धान्तादिकं निरूपयन्ति स्म । वस्तुतत्वविश्लेषणार्थं तैः काचन सरणिराविष्कृता, तस्या एव परिमृष्टं स्वरूपं मैक्समूलरेण, पार्जिटरकीथप्रभृतिभिश्च स्वकीयसर्वस्वकारसाहाय्येन समुपस्थापितम् । संस्कृतवाङ्मयपरिशीलनं तथैवरीत्या अद्यापि प्रचलति । सा चेयं प्रक्रिया तुलनात्मिका, ऐतिहासिकी वैज्ञानिकी चेति व्यपदिश्यते । आधुनिकभाषाविज्ञानाधुनिकेतिहासपुरातत्त्वशास्त्राणि तस्यां प्रक्रियायां प्रमाणत्वेनावधार्य्यन्ते । संस्कृत वाङ्मयस्य प्रकाशः स्वशक्त्यैव दिगन्तं व्याप्यातिष्ठते इति किमु वक्तव्यम् ।

इयमाधुनिकभाषाविज्ञानेतिहासप्रामाण्यवादिनी मीमांसाशैली ऐतिहासिकी, वैज्ञानिकी, तुलनात्मिका वा भवतु नाम प्रकामम् । प्रामाणिकी वा न वेति संशयस्तिष्ठत्येव । प्राचीनाचार्यापेक्षयाधुनिकवादानां स्वैरकल्पनामूलकरुचिभेदानन्त्येनानन्त्यमेवात एव--

> यः शास्त्रविधिमुत्सृज्य वर्त्तते कामचारतः
> न स सिद्धिमवाप्नोति न सुखं न परांगतिम्[3] ।।
> तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
> ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्त्तुमिहार्हसि[4] ।।

इति योगेश्वरेश्वरांशेनास्मत्कुलपूज्येन पाराशर्येण भगवता व्यासेनश्रीमद्भगवद्गीतायां या संशयापनोदनप्रक्रियोपदिष्टा, तामेव सरणिमाश्रित्य साहित्यशास्त्राचार्यैः काव्ये शब्दार्थसम्बन्धदोषाभावगुणालङ्काररीतिवृत्तिप्रवृत्त्यौचित्यादीनां निरूपणं कृतम् । अद्यापि तथैव रीत्या संस्कृतविश्वविद्यालयेऽधीयतेऽध्याप्यते च । तामेव शास्त्रीयां मीमांसासरणिमाश्रित्य नव्यसाहित्याचार्यैर्नियमनिर्धारणपुरस्सरं न्यायाः प्रसाधिताः ।

एक एव साहित्यसम्प्रदायः । संयोगाद् रसनिष्पत्तिः । संयोगपदस्य संयुक्तत्वसामान्याभिधायित्वे चमत्कारजननानर्हत्वात् कविकर्मबहिर्भावापत्तेर्नालङ्कारादिनिष्पादनक्षमत्वम्, रमणीयार्थप्रतिपादकत्वाभावाच्च न शब्दार्थयोः शब्दस्य वाक्यस्य वा काव्यत्वम् । अत एव सम्बन्धविशेष एवार्थः । स एव च 'रसपरिस्पन्दरमणीयः संयोगविशेषः' साहित्यम् । रसगङ्गाधरे संयोग ( साहित्य )-रसवादः, विभावरसवादः; अनुभावरसवादः, भावरसवादः, भोगरसवादः, ध्वनिरसवादः, रसानुमेयत्वमेवमादयो वादा यथाशास्त्रं निर्णीताः, तदेतत् सर्वमेव विभावादिनिष्पत्त्यन्तरसूत्रमूलकमिति वक्तव्यमुपरिष्टात् ।

१—२अग्निपुराण० अ० ३३८।१ ।
२—श्रीमद्भगवद्गीता—१६।२३ ।
३—श्रीमद्भगवद्गीता—१६।२४ ।
४—काव्यालंकारे पृ० ८५ ।

न्यायाः स्वयं सिद्धाः। प्रवर्त्तकः, निवर्त्तकश्च, व्यवस्था-विशेषो नियमः। नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः क्रियते।

न्यायश्च साधकं प्रमाणमिति मम्मटभट्टः। स्वशक्तिप्रयोज्यविधिनिषेधप्रयोजकत्वे सति विशेषावयवविशिष्टत्वं न्यायत्वमिति भामहोक्तादवगम्यते। प्रमाणानुग्राहकस्तर्को न्यायः। प्रमाणैरर्थपरीक्षणं न्यायः। न्यायानां प्रामाण्यं चमत्काराधायकत्वविघातकत्वादिनिर्णये सर्वत्रैव भवति। न्यायशरीरमेव युक्त्युपपत्तिभ्यामित्यन्यत्र विस्तरः।

सर्वेषामपि शास्त्राणां निष्यन्दमेतच्छास्त्रं क्वचित् क्वचित् शास्त्रान्तरीयरहस्यमनुवदति। किञ्चालङ्कारस्य सौन्दर्यपरत्वाल्लोकातिक्रान्तगोचरकविप्रतिभासाध्यत्वा – च्चातिशयान्वितवक्रत्वस्यैव जीवितत्वं भामहाचार्येणोपपादितमेव। 'सैषा सर्वत्र वक्रोक्ति'[1]। तस्याः काव्यार्थविभावकतया विभावत्वं विभावस्य रसत्वमित्यपि रससूत्रसिद्धम्। अतो वक्रोक्तिरपि काव्यजीवितमिति भामहोन्मीलितदिशैव वक्रोक्तेरपूर्वालङ्कारत्वमिति कुन्तकाशयाच्च काव्यसर्वस्वतापि सिद्ध्यति।

द्वावपि वाच्यप्रतीयमानावर्थौ काव्यशरीरमिति सर्वमतम्। शब्दार्थयोर्वर्णमूलकत्वात्, वर्णानां नादध्वनिमूलकत्वेन नादब्रह्मैव सर्वेषामपि वर्णानां मूलं नित्यम्, कूटस्थमक्षरञ्च। वर्णनित्यत्वाङ्गीकारादेव शब्दार्थसम्बन्धानामपि नित्यत्वमिति रमणीयः पन्थाः। गुणरूपः शब्दोऽनित्यः, न तु द्रव्यरूपः। वर्णपरमाणूनामपि नित्यत्वमेव। तन्मूलत्वाच्छब्दार्थयोरुभयोरपि नित्यत्वमेव। अत एवोभयोर्नित्यत्वं भामहमतम्। तथा हि—

> वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये।
> जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ[2]॥

इति वदन् कालिदासः संयोगरसवादम्;

> वर्णानामर्थसंघानां रसानां छन्दसामपि।
> मङ्गलानाञ्च कर्त्तारौ वन्दे वाणीविनायकौ[3]॥

इति महाकविस्तुलसीदासश्च काव्यस्वरूपमेव कटाक्षयतः। 'स्व'पदेनात्मनः, 'रूप'शब्देन चाङ्गपरामर्शः तस्यैव प्रकटत्वमभिव्यक्तिः। तस्यैव भोगः, वस्तुसौन्दर्यबलात्। मम्मटाद्याः स्थायिभावरसवादिनः। भाव एव विभावादिभिर्व्यज्यमानः, भाव्यमानो विभाव्यमानोऽनुभाव्यमानो वा चर्वणाविश्रान्तिधामतामापन्नो रसः अत एव भावुका एव सहृदया रसिकाश्च। भावाः सात्त्विकादिभेदेन बहुविधाः। तस्माद्भावो रसः, असंलक्ष्यक्रमश्चेत्यन्यत्र विस्तरः। भक्तेरपि नवरूपत्वात् तस्यैव शृङ्गारादयो भेदा इति रासपञ्चाध्यायीपरिशीलनेन स्फुटीभवति।

साहित्यशास्त्रस्य काव्याङ्गत्वमेवोचितम्। अत एव काव्याङ्गतयैव काव्यफलवत्त्वं काव्यशब्दव्यपदेश्यत्वं च। रसपदेनाप्यस्यैव शास्त्रस्य परामर्शः।

प्रज्ञात्मा आनन्दः अजरः अमृतं हितम्' इति श्रुतिस्वारस्याद् हितमानन्दः। '√हि ∠सह √षह √डुदाञ् √डुधाञ्' प्रकृतिभिः सहित–हि–शब्दौ। ताभ्यां भावे कर्मणि करणे स्वार्थे च ष्यञि साहित्यम्।

हितं सौन्दर्यमिति वामनः। सौन्दर्यमेवान्तर्बहिर्भेदेन द्विविधम्। बाह्यसौन्दर्यमेव वाच्यार्थः, अन्तःसौन्दर्यमेव

१—रघु० १।१।

२—रामचरितमानसः १।१।

३—कौ० ब्रा० उ० अ० ३।

४—तै० उ० २।७।१।

प्रतीयमानार्थः। एवञ्चालङ्कारशब्दविश्लेषणेनैव रूपस्यात्मनश्च बोधः। अलङ्कार्यालङ्करणयोरुभयोरेव प्रसिद्धत्वात्तन्मूलमलङ्कारमेव सौन्दर्य–लावण्य–शोभाप्रभृतिभिः शब्दैर्व्यवहरन्ति। ध्वनिवदलङ्काराणामपि साङ्कर्यसंश्लेषरीत्यानन्त्यं स्वयमेवोह्यम्। तदेतत् सर्वमनुसन्धायैव च रसपरिष्पन्द-रमणीयत्वमेव साहित्यशब्दापरपर्यायतया प्रतिष्ठामासादयतीति गुरवः।

रससूत्रीययोगविभागादेव साहित्यशास्त्रीयनियमन्यायानां दर्शनं स्पष्टायते। तदेतत् साहित्यागमरहस्यभूतं सूत्रं वर्णसमाम्नायवन्नित्यम्। काव्येऽपि स्मृत्यादिवन्मन्त्रादिवच्चानुपूर्वीनित्यत्वमस्त्येव।

काव्यं हि कवेः शब्दार्थमयी तनुः। अत एव काव्यानां स्मृतिकोटिप्रविष्टत्वेन लोकव्यवहारे शास्त्रेऽपि च प्रामाण्यं भवत्येव। तन्निरूपणपथि पद्यमानसंशयापनोदोपायस्य साहित्यशास्त्रैकसमधिगम्यत्वात् स्वतः प्रामाण्यं सिद्धम्।

कान्ताकटाक्षैकमात्रोद्घाटितबुद्धिकवाटो हर्षो नैषधीयमहाकाव्ये बालाकटाक्षविलासं बहुतरमनुभावयति रसिकान्। सैवाशेषविशेषातीता वेद्यान्तरस्पर्शादिरहितापि साहित्यशास्त्रीयनियमसहिता सत्यासत्यविशिष्टा सहृदयहृदयार्णवविकसितद्रुतिदीपित ( मनोनोद ) मनोमोदमाविर्भावयन्ती कवेः काव्यस्य कायस्य तत्त्वम्। स्वापाङ्गनिक्षेपाखिलकलिमलापसारणी तारिणी शब्दमयी तनुरेव संयोगाल्लोकोत्तरत्वं नित्यत्वञ्चापादयति। अत एव साहित्यशास्त्रीयनियमन्यायमीमांसामयीमनन्ताखिलैश्वर्यगुणगण– कल्याणनिलयां वियदीकारसंयुतवीतिहोत्रान्वितार्धेन्दु विलासामद्वितीयामपि द्वितीयां भूमापृष्ठे निधाय गुरूनभिवन्द्य च वाङ्मयार्णवं प्रवेष्टुकामोऽस्मि।

'रसो वै सः'[1] इत्यनेन रसस्य काव्यात्मत्वम्, 'चत्वार शृङ्गाः'[2]' इत्यनेन काव्योपकरणानि, रससूत्रव्याख्यानं व्यासस्यालङ्कारप्रस्थापनपरमाचार्यत्वं भामहदण्डिध्वनिकाराणां साहित्यसम्प्रदायाचार्यत्वं बहुसम्प्रदायवादखण्डनादिकं चोपस्थाप्यमानं निबन्धादाकलनीयमिति भूयो भूयो विदुषस्समभ्यर्थ्य च मुधा लेखाद् विरम्यते।

[ सारस्वती सुषमातः साभारम्

## ❀ मयूरः ❀

प्रसन्नतां याति परां, स्वपक्षौ + प्रसार्य नृत्यं विदधाति यावत्।
उपैति मालिन्यमहो समन्तादालोकते चेच्चरणौ मयूरः॥
विमर्श-विश्रब्ध-सुधाम्बुदीये, धाराझरे वर्षति चित्तवृत्तौ
प्रसार्य संकल्प--विकल्प--पक्षौ प्राणात्मको नृत्यरतो मयूरः॥

–डॉ० परम हंस मिश्रः

१---शु० यजु० १७।९१।

# निरुक्तं ध्वनिपरिवर्तनञ्च

डा० रामाशीष पाण्डेयः

संस्कृत विभागाध्यक्षः राँचीस्थ मारवाड़ी–महाविद्यालयस्य

उच्चारणेन्द्रियैस्तेषां संयोग वियोगाभ्यां निष्पन्नः स्फोटः ध्वनिरितिव्यवह्रियते[1]। साहित्यशास्त्रे तु ध्वनिशब्दस्यार्थपञ्चकं दृश्यते–ध्वनतिय: स व्यञ्जकः शब्दो ध्वनिः ध्वनति ध्वनयति वा यः स व्यञ्जकोऽर्थोध्वनिः ध्वन्यते यः स ध्वनिः, वस्त्वलंकार रसादि लक्षणोऽर्थः, ध्वन्यतेऽनेनेति वा ध्वनिः व्यञ्जना व्यापारः, ध्वन्यतेऽस्मिन्निति ध्वनिः ध्वनिः उत्तमं काव्यम्[2] भाषाविज्ञान–क्षेत्रे तु स्वरवर्णादि ध्वनि-रूपेण व्यवह्रियते। ध्वनिरयं शब्दस्याङ्गभूतः शब्दस्याधाररूपञ्च। महाभाष्ये–येनोच्चारितेन सास्नालाङ्गूलककुदखुरविषाणिनां सम्प्रत्ययो भवति सशब्दः एवं प्रतीतपदार्थकोलोके ध्वनिः शब्द इत्युच्यते''[3] इत्यनेन उच्चारणेन्द्रियैरुच्चरितः शब्दांशः ध्वनिरिति। पाणिनीय शिक्षायाम्—

> ''आत्मा वुद्धया समेत्यर्थान् मनोयुङ्क्ते विवक्षया
> मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्
> मारुतस्तूरसि चरन् मन्द्रं जनयति स्वरम्
> वर्णाञ्जनयते तेषां विभागः पञ्चधास्मृतः ॥'' ६–९

इत्यनेनापि उच्चारणेन्द्रिसंयोग वियोगाभ्यां निष्पन्नो ध्वनिः स्वरव्यञ्जनादि--रूपो विदितमेव। ध्वनिरेव भाषाया आधारस्तम्भः। भाषायाः शरीरं स एवेति कथनं सर्वथा संगतम्। तस्यात्मा तु तस्मादागतः ध्वनितार्थः प्रसिद्धः[4]। ध्वनेः परिवर्तनं ध्वनिपरिवर्तनमिति विग्रहेण भाषाणां शब्देषु वा ध्वनिपरिवर्तनं ज्ञायते। स्थानकरणप्रयत्नानुप्राणितमुच्चारणं शिष्टानामशिष्टानां पुनः तद्भिन्नं भवति। प्राचीनकाले उच्चारणदोषयुक्ताः अपभाषणकर्त्तारो म्लेच्छशब्देनाख्यायन्तेस्म। महाभाष्ये 'न म्लेच्छितवै नापभाषितवै'; [5]इति कथयता महर्षिपतञ्जलिना त एव संकेतिता। शतपथ ब्राह्मणेऽपि असुराणां भाषा म्लेच्छभाषा आसीदिति प्राप्यते। ध्वनिषु नानाप्रकारकाणि परिवर्तनानि संलक्ष्यन्ते। तेषु स्थान काल-पात्र-स्थितिजन्यानि कारणान्यपि बहूनि सन्ति। शिष्टानां भाषाऽपि उच्चारणाङ्गदोषादन्याच्च दोषादपूर्णतां याति। त एव शब्दा भाषायाः गौणाङ्गभूता क्रमशः प्रधानतामधिरोहन्तीति तु प्रायेण सर्वासु भाषासु दरीदृश्यते।

अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तमिति सिद्धान्तमनुपालनपरमाचार्यस्य यास्कस्य निरुक्तं संस्कृतजगति नितरां गौरवास्पदमिति जानन्त्येव भारतीय–पाश्चात्याश्च विद्वांसः। पुरा स्वकीये निरुक्ते निर्वचनप्रक्रियायां स्वीयाभिमतमुपस्थापयता महर्षिणा यास्केन भाषावैज्ञानिकानां भाषातत्वविदां कृते च यादृशी भाषाविज्ञानजन्या प्राथमिकी दृष्टिर्दत्ता सा तु प्रशस्या। निरुक्ते-अस्मिन् भाषासम्बद्धानि सर्वाण्यङ्गाणि प्रतिपादितानि

---

१––''यः संयोग विमोगाभ्यां करणैरुपजन्यते स स्फोटः शब्दजाः शब्दाध्वन्योन्यैरुदाहृताः ॥'' वा० प० १।१०२

२––बिहार संस्कृत सञ्जीवन समाज य संस्कृत भाषायामाला पत्रिका–पृ० ३०–३१

३––महा भा० ( पस्पशाह्निक ) ४––''अर्थं वाचः पुष्पफलमाह''–नि० १।६ ५––श० ब्रा०– ३।२।१।२४

सन्ति परं शब्दार्थ–विषयकं ध्वनिविषयकञ्च वर्णनवैशिष्ट्येन भाषावैज्ञानिकतामुपदधाति । अत्र ध्वनिपरिवर्तनस्य किं स्वरूपमिति विवेचनं प्रस्तूयते—

भारतीय प्राचीनैर्निरुक्तकारैः निर्वचनस्य पञ्च सिद्धान्ताः प्रतिपादिताः । ते ध्वनिपरिवर्तनस्य पञ्चदशाः मूलतो द्योतयन्ति––

"वर्णागमो वर्ण विपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ।।

( नि० द्र० वृ० १।१।१ पृ० ५ )

वैयाकरणाः अपि सर्वानेतान् सिद्धान्तान् स्वीकुर्वन्ति । हंस इति शब्दे हन् हिंसागत्योरितिधातौ स वर्णस्यागमः, सिंह इति शब्दे हिंस हिंसायामिति धातौ वर्णविपर्ययः, गूढोत्मा इति शब्दे वर्ण निवृत्तिः पृषोदरमिति शब्दे पृषत् + उदरमित्यत्र त् वर्ण लोपश्चेति दृश्यते[1] आचार्ययास्कोऽपि निर्वचनस्य प्रचलितानेतान् सिद्धान्तान् स्वीकुर्वन् स्वकीये निरुक्तशास्त्रे तद्विषयसम्बद्धं सूक्ष्मपरिशीलनं कृतवान् । परिणामतो ध्वनिपरिवर्तनस्य स्वरूपं ध्वनेः परिवर्तितं रूपञ्च समुपस्थापितमत्र समुपस्थाप्यते––

वर्णागमः --निर्वचन–सिद्धान्तेषु वर्णागमः प्राथम्येन गृहीतः । शब्देषु नूतन ध्वनेरागमनमेव वर्णागम–रूपेण गृह्यते । शब्दस्य कस्मिन्नप्यंशे नूतन वर्णागमो भवति । भाषावैज्ञानिक–पद्धत्या मुखसुखोच्चारणमेवात्र कारणं प्रधानभूतम् । अन्यान्यपि कारणानि संभावितानि । वर्णागमो द्विधा–स्वरवर्णागमो व्यञ्जन–वर्णागमश्च । तत्र स्वरवर्णागमस्यापित्रिधास्थितिः–आदि स्वरागमः, मध्यस्वरागमः अन्तस्वरागमश्चेति । आदिस्वरागमः––शब्दादौ स्वरवर्णस्यागमः कथ्यते आदिस्वरागमः । यद्यपि महर्षिणा यास्केनादिस्वरागमस्य प्रासंगिकोदाहरणं नैव समुपस्थापितं तथापि निरुक्ते संकेतिताः प्रयुक्ताश्चानेकशब्दा आदिस्वरागमेन युक्ता विद्यन्ते । अभूत्[2] अभवत् इत्यादौ आदिस्वरागमो नितरां प्रसिद्धः ।

मध्यस्वरागमः–पदमध्ये स्वरस्यागमः कथ्यते मध्यस्वरागमः–पदमध्ये स्वरस्यागमः कथ्यते मध्यस्वरागमः । 'पृथ्वी' इत्यस्मिन् पदे मध्ये 'इ'स्वरवर्णस्यागमे सति पृथिवीति[3] । एवमेव भरुज[4] शब्दे भ्रस्जपाके धातोरङ् प्रत्यये कृते भवर्णस्याग्रे अस्वरस्य तथा रवर्णस्याग्रे ऊ स्वरस्यागमौ दृश्येते । एतादृशः स्वरस्यागमः स्वरभक्तिनाम्नाभाषा विज्ञाने नितरां ख्यातः ।

अन्तस्वरागमः—पदान्ते स्वरस्यागमो भवति अन्तस्वरागमः । मिह् सेचने धातोर्निष्पन्ने मेघ[5]शब्दे घस्थितस्य 'अ' स्वरस्यागमः एवं गाध् बन्धनेधातोर्निष्पन्ने नाध[6]शब्दे धस्थितस्य 'अ' स्वरस्यागमश्चान्तस्वरागमौ स्तः ।

वर्णागमेषु व्यञ्जनवर्णानामागमस्य स्थितिरपि त्रिधा विद्यते । आदिव्यञ्जनागमः–पदादौ व्यञ्जनवर्णस्यागमः कथ्यते आदिव्यञ्जनागमः । पदादौ स्वरस्य स्थाने व्यञ्जनवर्णस्यागमो प्रायेण दृश्यते । संस्कृतभाषायाः 'ओष्ठ'शब्दान्निष्पन्नः हिन्दीभाषायां तद्भव 'होठ' इति शब्द एतादृशः आदि व्यञ्जनागमेन युक्तः । अत्र 'अ' स्वरस्य स्थाने 'ह्' व्यञ्जनवर्णस्यागमो पदादौ विद्यते । अय् गतौ धातोर्निष्पन्नादायुशब्दान्निष्पन्ने 'वायु'[7] शब्दे पदादौ 'व'

१–– "भवेद्वर्णागमाद्धंसः सिंहो वर्ण–विपर्ययात् गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ।।"

अष्टा० ६।३।१०६ सूत्रस्य वृत्ति–सि० को० पृ० १०१

२––नि० ६।३, ऋ० ४।३४।३

३––नि० ७।५

४––नि० २।१

५––नि० २।१

६––नि० २।१

७––नि० ३।१

व्यञ्जनागमो दृश्यते। एवमेवांगल शब्दान्निष्पन्ने मंगल-शब्दे पदादौ 'म' व्यञ्जन वर्णस्यागमः।

मध्यव्यञ्जनागमः—पदमध्ये व्यञ्जनवर्णस्यागमः कथ्यते मध्यव्यञ्जनागमः। सन्तः शब्दे मध्ये त व्यञ्जन-वर्णागमो दृश्यते।

अन्तव्यञ्जनागमः—पदान्ते व्यञ्जनागमोऽन्त व्यञ्जनागमः। अस् भुवि धातोर्निष्पन्ने 'आस्थत्'[१] पदे 'अस्यतेस्थुक्'[२] इति सूत्रेण युगागमो अन्तव्यञ्जनागमः।

२—वर्णविपर्ययः ( Metathesis ) पदस्यैकस्मिन् वर्णस्य स्थाने तत्पदस्थस्यापरस्य वा वर्णस्य परिवर्तनं दृश्यते। स्थितिरियं वर्णविपर्ययस्य भाषावैज्ञानिकदृष्ट्यापि स्वीकृता। वर्णविपर्ययोऽपि त्रिधा दृश्यते—आदि विपर्ययः, अन्त विपर्ययः, आद्यन्त विपर्ययश्च।

आदि विपर्ययः—आंग्लभाषाया Assimilation ( समीकरणम् ) शब्दः निरुक्ते आदि विपर्यय रूपेण स्वी-क्रियते। आदि विपर्यये पदस्याद्यवर्णस्य परिवर्तनं भवति। द्युत् दीप्तौ धातोर्निष्पन्ने ज्योतिः[३] शब्दे आदावस्थितस्य द वर्णस्य स्थाने ज वर्ण—परिवर्तनं जातम्। अनेन प्रकारेण घन विन्दु, बाह्य[४] शब्देषु क्रमशः हन हिंसागत्योः धातो-र्हस्य स्थाने घ, भिदिर् विदारणे धातोर्भस्य स्थाने व एवं भट्भृत्तौ धातोर्भस्य स्थाने ब वर्णस्य विपर्ययः आदि-विपर्ययः।

अन्तविपर्ययः—पदेषु अन्त्यवर्णस्य विपर्ययोऽपि दृश्यते। अयमन्तविपर्ययः निरुक्ते अन्तव्यापत्तिशब्देन व्यवह्रियते[५]। मिह् सेचने धातोरन्त्य ह वर्णस्य स्थाने घ कृते मेघ, णह् बन्धने धातोरन्त्यस्य ह वर्णस्य घ कृते नाधः, गाह् विलोडने धातोरन्त्यस्य ह वर्णस्य स्थाने ध कृते गाधः, वह् प्रापणे धातो रन्त्यस्य ह वर्णस्य ध कृते वधूः, मद्तृप्तौ धातोरन्त्यस्य द वर्णस्य स्थाने ध कृते मधुः शब्दादयो निष्पन्नाः भवन्ति[६]। एतेषु शब्देषु वर्णानित्यां परिवर्तितमस्ति।

आद्यन्त विपर्ययः—पदस्यादावन्ते च वर्णानां विपर्ययः आद्यन्त विपर्ययः। श्रुतिरक्षरणे धातोर्निष्पन्ने स्तोकशब्दे धातावाद्यन्त—विपर्ययो दृश्यते। अनेन प्रकारेणाद्यन्त-विपर्ययेण सृज् विसर्गे धातोर्निष्पन्नो रज्जु शब्दः, कस् विकसने धातोर्निष्पन्नः सिकताशब्दः, कृती छेदने धातो निंष्पन्नस्तकुरित्या दयः शब्दाः आद्यन्तविपर्ययस्योदाहरण-भूताः।[७]

वर्ण विपर्ययान्तर्भूतं अल्पप्राणीकरणं महाप्राणी-करणञ्चेत्यादीनि ध्वनिपरिवर्तनानि निरुक्तेऽपि दृश्यन्ते—

अल्पप्राणीकरणम्—अस्मिन् विपर्यये शब्देषु महा-प्राणवर्णस्य स्थाने अल्प प्राणवर्णस्य परिवर्तनं जायते। भिदिर् विदारणे धातोर्निष्पन्ने बिन्दु शब्दे, भट्भृतौ धातो-र्निष्पन्ने बह्यः शब्दे च महाप्राणभवर्णस्य स्थाने व अल्प-प्राण वर्णस्य परिवर्तनं जातम्[८] क्रियासु द्वित्वमापन्नेसति अनेनैव प्रकारेण महाप्राण वर्णस्य स्थाने अल्प प्राणवर्णस्य स्थाने अल्प प्राणवर्णस्य योगो भवति। हु धातोर्निष्पन्ना जुहोति जहार वा क्रिया अल्पप्राणीकरणस्य परिणामरूपा। यदि अल्पप्राणीकरणं न भवेत् तर्हि क्रमशः हुहोति हहार

७—नि० ६।१

१—नि० २।१ २—अष्टा० ७।४।१७

३—नि० २।१ ४—नि० २।१

५—'अथापि अन्तव्यापत्तिः भवति' नि० २।१ ६—नि० २।२

७—अथापि आद्यन्त विपर्ययो भवति—स्तोकाः, रज्जुः, सिकता तर्कुरिति—नि० २।१ ८—नि० २।२

# विद्वदनुग्रहः

( १ )

अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः

पञ्चपञ्चाशद्वर्षस्य पौषमासीय १२ द्वादशाङ्के सूर्योदयाख्ये संस्कृतपत्रे श्रीभारतधर्ममहामण्डलतः प्रतिमासं नियमतः श्रीडा० परमहंसमिश्रमहोदयस्यान्वर्थसंज्ञाभृतः सम्पादकत्वे निःसरतः संस्कृतभाषायाः स्फुटम् साम्प्रति कीमवस्थां वर्णयन् श्रीमान् आचार्यः श्रीविश्वनाथमिश्रः शार्दूल संस्कृतविद्यापीठाद बीकानेर मण्डलाद यद वदति। तद्धि सर्वैः सूर्योदयपाठकैः पठितमेव स्यादिति तस्य लेखस्य लेखकेभ्यो महात्मभ्यः स्पष्टवक्तृभ्यो यावन्तोऽपि धन्यवादा दीयेरन्, तेऽनन्ता अपि अल्पीयांस एवेति मे मतम्।

अहं संस्कृतपरीक्षा सञ्चालकान् सं० सं० विश्वविद्यालययाधिकारिणोऽनुरुणध्मि यद यदि तेऽभिलषन्ति संस्कृताभ्युदयं 'यथा परम्परागत संस्कृतशिक्षाया भविष्यम्' इति नाम्ना प्रश्नावलीं निर्माय यतन्तां तदभ्युदयायेति। ते पठन्तु तंलेखम् अप्रियस्यच पथ्यस्य वक्ता श्रोता चदुर्लभं 'हितंमनोहारिचदुर्लभंवचः' इत्यादि सुभाषितानि स्मृत्वा शीघ्रातिशीघ्रम् संस्कृत परीक्षा प्रकारं परिवर्तयन्तु। 'पी० एच्डी' इति संस्कृत भाषाया गलितकुष्ठ सूचकं गर्हितशब्दमेव ततो निःसारयन्तु द्रुतम्।

प्रथमपरीक्षातः प्रवर्तिताम् इमाम् बहुविषय बहुलामनन्तग्रन्थराशिसंभृतां खरवोढव्यां वस्त्रराशि–पोटलिकामिवापाकृत्य द्रुतम् स्वगुरुभिर्गङ्गाधरशास्त्रि दामोदरशास्त्रि शिवकुमारशास्त्रि प्रभृतिभिश्चालिता 'पण्डित' इत्युपाधि दात्रीं प्रथमां परीक्षां चालयन्तु। यत्र लघुकौमुदी पाणिनीयप्रबोधो वा व्याकरणे, साहित्ये- रामायणं मूलमात्रं रघुवंश काव्यं वा सर्गद्वयं स्यात्। अनुवादशिक्षार्थं संस्कृतशिक्षकं किमपि तत्तुल्यं पाणिनीयं वैज्ञानिकपद्धतया निर्मितमं सरलतं सन्धिसमासशब्दरूपपञ्चषबोधकं पुस्तकं स्यान्नाम। यतः प्रथमायामेव विद्यार्थिनोऽनुवादशिक्षया ऋजुपणिनीय सूत्राधारमेव व्याकरणमर्मज्ञाः पर्याप्तसंस्कृतज्ञानाः स्युः।

तत्रापि नैव स्याद्विषय बाहुल्यविभागः केवलं कणादं पाणिनीयं च सर्वं शास्त्रोपकारकम्' इति सूक्तिवचसा पाणिनीयाष्टकं तद्व्याख्यानं काशिकापुस्तकं कारिकाशं विहायाथवा सिद्धान्त-कौमुदीं वाऽष्टकाधारं पाठयन्तु साहित्यग्रन्थे भट्टिकाव्यं स्यात्। दर्शन स्थाने न्यायसिद्धान्त मुक्तावलीं पाठयन्तु। ग्रन्थत्रयमेव पर्याप्तम् संस्कृतभाषावशीकाराय, नात्र मध्यमा परीक्षायां विषये विषयान्तरस्य सन्निवेशः। केवलं ज्योतिःशास्त्रस्यैव सिद्धान्तफलितयोरुभयोरैक्यं विषयदृशा भवेन्नाम। यथा पूर्वकाले मध्यमात्रयमासीत्तथाऽधुना मध्यमा द्वयमेव स्यात्। नान्येषां विषयाणां मध्यमा स्यान्नापि हिन्दी-भाषाया बाहुल्यं संस्कृतपरीक्षायां कार्यम्। अम्बिकादत्त व्यासः सुधाकर–द्विवेदी हजारी प्रसाद द्विवेदी बाबू हरिश्चन्द्रः। किमिमे हिन्दीभाषामधीत्य हिन्दीलेखका जाताः।

संस्कृतभाषाया हि अशक्तैरभिधातृभिर्व्यतिकीर्णा हिन्दी अपभ्रंश भाषा कथ्यते। यदि साधुसंस्कृतज्ञा भवता छात्राः सुबुद्धाः प्रौढ़ा परीक्षोत्तीर्णानिसरिष्यन्ति, तर्हि ते स्वयं हिन्दी भाषाया महापण्डिता भविष्यन्ति। तदर्थं संस्कृतां गिरं न विनाशयन्तु कोमल बुद्धि छात्रमस्तिष्के हिन्दी ग्रन्थ बाहुल्यं सन्निवेश्येत्यलम्।

विशेष विचारन्तु भवन्तःसर्वेऽपि आदर्शवादिनो व्यावहारिकाश्च सन्ति स्वयं विविञ्चन्तु। न तत्रमे किमपि वक्तव्यम्। एतावदेव मे भवद्विधेषु वाच्यमस्ति यद्—

मेकालया वृटिशराज्य-दृढीकृते या पाश्चात्य शिक्षणसृतिर्निहिता छलेन।
सैवाऽधुना सुरगिरं विधुनोति नूनं, तां सन्निरुध्य सुरवाचमिमामवन्तु॥

इति शिवम्

श्री गोपालशास्त्री 'दर्शनकेशरी'
डी० ५९।३१ सिगरा वाराणसी।

( २ )

श्रीमत्सु सूर्योदय-- ललितासदनम्
सम्पादक--महोदयेषु नरासारावपेट
सप्रश्रयं कृताञ्जलिः किञ्चिद्विज्ञापयामि ता० २९-४-८०

भवद्भिः स्सादरं सदयं प्रेष्यमाणाः सूर्योदय सञ्चिकाः प्रतिमासं प्राप्ताः काठकोपनिषद्विशिष्टाः षट्प्रत्येक सञ्चिका- अपि हस्तगताः येन विद्वत्सुहृद्भ्योःवितरणावकाशः कल्पितः। तत्र मम कृतज्ञता प्रणतयः स्वीक्रियन्ताम्।

अधुना कठोपनिषदः द्वितीयवल्ली अनुवादमात्रं प्रेषयामि। यदि न श्रमाय तर्हि मूलेन संयोज्य आगामि सञ्चिकायां मुद्रापयितुमनुगृह्णन्तु। नो चेदनुवादमात्रं मुद्रापयन्तु। [ मुद्रापिता सेति। सं० ]

भवदीयः
डा० शेषगिरि शर्मा

( ३ )

मान्यः,
सम्पादक महोदयः
'सूर्योदयः'
श्री भारतधर्म महामण्डलम् ( वाराणसी-कैण्ट )

श्रीमन्!

मया भवत्सम्पादितः सूर्योदयः दृष्टः सम्यक्रूपेण पठितश्च। मन्येऽहं यत् संस्कृतस्योन्नतिं सम्पादनाय श्रीमता सम्पादितोऽयं 'सूर्योदयः' जाड्यान्धतमिस्रामपसार्य करोति सुमनसां मनसि नव सर्जनोल्लास-सुप्रभातम्।

एतस्मिन्नवसरे अपदार्थभूतोऽप्यहं 'विनयः' सविनयं स्वविरचितेमां काव्याञ्जलिं सम्प्रेषयामि। सूर्योदयस्यो पस्थानाय निवेदितेयं काव्यपुष्पाञ्जलिः यदि समुचिता स्यात्तर्हि प्रकाशनीयाऽत्रभवता। शेषमस्तिकुशलमिति।

भावत्कः
'विनयो' मिश्रः
पहरा-हरपालपुर-छत्रपुर मध्यप्रदेशात्

( ४ )

श्रीमन्तो डा० परमहंस मिश्र महोदयाः

सम्पादकाः, सूर्योदयस्य, वाराणसी

सादरं नतयः

मान्याः

बहुदिनान्तरं प्रहिणोमि पत्रमिदं भवत्सकाशम्। आशासे सान्तिभवन्तः प्रसन्नाः कुशलिनश्च। पत्रेणानेन साकं प्रकाशनार्थं सूर्योदये प्रेष्यते लेखश्चाप्येकः। कृपया सूर्योदये तत्कालं प्रकाश्यमानेऽचिरादेव वा प्रकाश्यमानेऽग्रिमेऽङ्के प्रकाश्य चैनं कृतार्थयिष्यन्ति तत्रभवन्तो लेखकवरमिति मे कामना। सूर्योदये प्रकाश्यमुपगतोऽयंलेखो लेखकस्य भृत्याप्रदाने [ जीविकार्थेकृतविनियोजने ] नान्तरीयकतां भजते। तस्मात् प्रकाश्यचैनमचिरादेव दापयित्वा च जीविकां पुण्यभाग्भिर्भाव्यं श्रीद्भिरिति सततं कामये। लेखप्रकाशनान्तरं पत्रिकायाः प्रतित्रयं लेखकस्य निर्देशेनयदुट्टंकितो वर्तते लेखे लेखकसविधेप्रेषणीयं, येन स्यात्तदीयंकल्याणम्। कृपापत्र द्वारा नैजं कुशलवृत्तं सूचनीयमिति।

भवदीयः

विश्वनाथ मिश्रः

व्याकरण साहित्याचार्य एम. ए.

प्रधानाचार्यः श्री संस्कृत विद्यापीठ बीकानेरः

( ५ )

श्रीमन्तो मिश्रमहाभागाः

सम्पादकाः 'सूर्योदयस्य'

सादरं नमोवाकम्प्रशास्महे

सेवायां सूर्योदये प्रकाशनार्थं—

'क्षीरसागरशयि भगवान् श्री विष्णुः।' 'भगवान् श्रीकृष्णः किं पूर्णावतारः'

इति शीर्षकौ लेखौ प्रहीयेते। प्रकाशनानुग्रहो विधीयताम् अमरगव्यामिदानीं सूर्योदयः साधु नियमितं तद्ब्रह्माधायकं वैदुष्य पूर्णं चानुपमं प्रकाश्यते। चिरञ्जीवतात् तत्।

शेषं भगवत्कृपा, शुभाशंसी—शिवकुमारः शास्त्री

( ६ )

माननीयेषु श्रीमत्सु सूर्योदय सम्पादकमहोदयेषु

आचार्य परमहंस मिश्रवर्येषु सादरं प्रणामाञ्जलयः।

महाशयाः,

तत्र भवद्भिर्भवद्भिः प्रहित सूर्योदयस्याङ्कद्वयं ( फरवरी-मार्च-१९८० ) मया धन्यवादैः समं गृहीतम्। पठित्वा सर्वं मनसि महती प्रसन्नता जाता।

सूर्योदये बहुविधानां युगोपयोगि लेखानां समाहारेण पत्रिकायाः गुणात्मकं मूल्यम् उत्तरोत्तरं वरीवृध्यत इत्यनुभूयते मया ।

भवतां वलवत्तरेण सम्पादन कौशलेनायं सूर्योदयः देशेऽधुना प्रकाश्यमानाभ्यः संस्कृत पत्रिकाभ्यः यथोचितमालोकं सदा दर्शयन् भातु इति नः आशंसा ।

"निन्दन्ति नीतिनिपुणाः" शीर्षकीभूताः अष्ट श्लोका भवतां सूर्योदये प्रकाशनार्थं मया प्रेष्यते । भवताम् इमे मनोनीताः स्युरिति आशास्यते । सादरं प्राप्तिः-स्वीकरणीया

सादरं भवतां सौहार्दं कामयमानः

भावत्कः

दिगम्बर महापात्रः
सम्पादकः—'उत्कलोदयः'
राउरकेला, उड़ीसा ।

# कर्ममीमांसादर्शनम्

[ मोक्षपादः ]

भगवत्पूज्यपादाः महर्षयः ज्ञानानन्दगुरुवर्याः

अन्यदपि—

**तन्नाशात्तन्नाशः ॥ २६ ॥**

तस्य अभ्यासस्य नाशात् तन्नाशः कर्मबीजसंस्कारस्यापि नाशोऽभ्युपगन्तव्यः अभ्यासोत्पत्तिराहित्यात् जीवनमुक्तमहात्मनि व्युत्थानस्य क्षणिकत्वादस्थायित्वाच्च तदीयशक्तिविहीनान्तःकरणे नोत्पद्यतेऽभ्यासप्रभावस्तदा तदन्तःकरणे संस्कारचिन्हं नोदेतुं शक्नुयात् । सुतरां संस्कारजननासामर्थ्यात् जीवन्मुक्ते क्रियमाणसंस्कारो नोत्पद्यते । स्मर्यते चात्र—

निःसंगरूपतोभोगात्तत्वज्ञे भोगजास्तथा ।
संस्काराः क्रियमाणानां जायन्ते नैव कर्मणाम् ॥
ज्ञानिनां नैव सम्बन्धः पद्मपत्रमिवाम्भसा ।
विद्यतेऽसंशयं कल्याः ! सार्द्धमागामिकर्मभिः ।
अतस्तान्यपि नश्यन्ति ज्ञानयोगेन सुव्रताः ।
सर्वाण्यागामिकर्माणि नात्र कार्या विचारणा ॥२६॥

निःश्रेयसलक्ष्यतोऽभिधीयते—

**उपाधितो भ्रान्तिर्मेघचन्द्रवत् ॥ २७ ॥**

मेघचन्द्रवत् मेघस्य चन्द्रमा यथा गतिशीलः प्रतीयते तथैवोपाधितो भ्रान्तिर्भ्रमो जायते । संस्कारोत्पत्तिविनाशक्रमं वर्णयित्वा पूज्यपादेन महर्षिणा सूत्रकारेणाभिधीयते यत् स्वाभाविकसंस्कारव्यतिरिकास्वाभाविकसंस्कारोत्पत्तिमूलकारणं तत्वज्ञानाभावः, अज्ञानकारणादनात्मन्यात्मभानमुपाधिसंयोगतः समुद्भवति । वर्षर्त्तावाकाशे मेघाच्छन्ने पवनप्रभावादेकस्या दिशाया अन्यत्र दिशि मेघगमनोपाधिना चन्द्रश्चलन्निव प्रतिभाति, चन्द्रमसो गतिशीलत्वेऽपि तद्गतिर्नैव नेत्रप्रत्यक्षयोग्या, परन्तु वर्षर्तौ चन्द्रमाः कदाचित् पूर्वस्यां कदापि पश्चिमस्यां कर्हिचिद्दक्षिणस्यामुत्तरस्यां वा गच्छन् निभाल्यते, एतादृशभ्रमप्रतीतिनिराकृतिरनुमानतः सम्भवा । आकाशे मेघं गतिशीलं निरीक्ष्य निश्चीयते यन्मेघगमनोपाधिनैव चन्द्रगतिरनुभूयते, वस्तुतस्तद्गतिर्भ्रममूलिकैव । भ्रमोऽयमज्ञानमूलकः । अज्ञानजनन्यविद्या, विद्याया उदयेन ज्ञानोत्पत्तिस्तया च भ्रमप्रमादौ दूरीभवतः सत्यविकासश्च जायते ॥ २७ ॥

इति क्रियारूपं जायेत । परं संस्कृत भाषायां एतादृशं रूपं नैवोपलभ्यते ।

महाप्राणीकरणम्—पदेषु अल्पप्राणवर्णस्य स्थाने महाप्राणवर्णस्य परिवर्तनं जायते । मद तृप्तौ धातोर्निष्पन्ने मधु[1]शब्दे द अल्पप्राणवर्णस्यस्थाने ध महाप्राणवर्णस्य परिवर्तनं भवति । एवमेव स्यद प्रस्रवणे धातोर्निष्पन्ने सिन्धु[2]शब्दे ग्रस् अदने धातोर्निष्पन्ने घ्रस[3]शब्दे, स्कन्द गति शोषणयोर्धातोर्निष्पन्ने स्कन्ध[4]शब्देष्वपि महाप्राणीकरणं दृश्यते ।

महाप्राणवर्णस्य स्थाने महाप्राणध्वनेः परिवर्तनम्—निरुक्ते एतादृशं परिवर्तनमपि लभ्यते ओघः, मेघः, नाघः, गाधः, वधूः,[5] प्रभृतिशब्देषु प्रथमद्वयोः ह महाप्राणवर्णस्य स्थाने घ महाप्राण वर्णस्यावशिष्टेषु शब्देषु च ह महाप्राणवर्णस्यस्थाने महाप्राण ध वर्णस्य परिवर्तनं जायते ।

रलयोरभेदः—रलयोरभेदात् रवर्णस्यस्थाने ल वर्णः, ल वर्णस्य स्थाने च रवर्णः वैदिक-कालादेव लभ्यते । भाषावैज्ञानिक-सिद्धान्तेषु स्वीकृतमिदं परिवर्तनं क्षेत्रीय-भाषायां बाहुल्येन प्राप्यते । निरुक्तेऽपि निर्वचनक्रमे सिद्धान्तोऽयं स्वीकृतः । उरूकर शब्दान्निष्पन्नः उलूखल[6]-शब्दः, कपिरिवजीर्णः शब्दात् कपिञ्जलः[7], पुरुकाम शब्दात् पुलुकामः, मृ धातोर्मरणात् विल्वः,[8] अश्रीमत् शब्दादश्लील[9]प्रभृति शब्देषु लवर्णस्य स्थाने र वर्णस्य कल्पना दृश्यते । एवमेव बालवन्तात् वारवन्तम्, लिहन्ति शब्दात् रिहन्ति प्रभृति शब्देषु र वर्णस्य स्थाने ल वर्णस्योद्भावनं दृश्यते ।

र वर्णस्योद्भावनं ढ वर्णेन—निरुक्ते र वर्णस्योद्भावना ढ वर्णेनापि दृश्यते । अमूरः मूरः इति शब्द निर्वचन-क्रमे अमूढः मूढः इति समायोजयता आचार्ययास्केन उपर्युक्तस्य सिद्धान्तस्य पोषणं कृतम् ।[10]

स, श वर्णयोः ष वर्णेनोद्भावनम्—मूर्धन्योष्म ष वर्णस्योच्चारणे प्रायः दन्त्योष्म स वर्णस्य तालव्योष्म श वर्णस्य वा प्रवृत्तिः प्राचीनकालात् दृश्यते । क्षेत्रीयभाषायां तु एतादृशी प्रवृत्तिः पूर्णरूपेणाद्यापि दृश्यते । यथा अर्धमागधी भाषायां मूर्धन्योष्म तालव्योष्म वर्णयोः स्थाने दन्त्योष्म वर्णस्योच्चारणं श्रूयते । एवमेव मागधी भाषायां मूर्धन्योष्म दन्त्योष्म वर्णयोः स्थाने तालव्योष्म वर्णस्योच्चारणं भवति । निरुक्तेऽपि कृष् धातोर्निष्पन्ने कण[11] शब्दे कुष् धातोर्निष्पन्ने कोश[12]शब्दे च मूर्धन्योष्म वर्णस्य तालव्योष्म वर्णता दृश्यते ।

ऋवर्णस्य ध्वन्यान्तरता—ऋवर्णोऽपि ध्वन्यान्तरतां प्राप्नोति । अद्यापि भारतवर्षस्य विभिन्नप्रदेशेषु संस्कृत-शब्दः कुत्र तु संस्कृत, कुत्रापि तु संस्क्रत कुत्रापि सम्सक्रत शब्दैराख्यायते । एवमेव शृङ्गार शब्दोऽपि कुत्र तु श्रंगारः, कुत्र तु शृंगारः प्रभृति ध्वनिमवाप्नोति । गृहशब्दस्योच्चारणेऽपि ग्रह ग्रुह शब्दयोः ध्वन्यन्तरता श्रूयते । निरुक्ते ऋ वर्णस्य विकासः मूलतस्त्रिधास्थितः । सृतः शब्दात् सतः[13] कृष्धातोःकशा प्रभृति शब्देषु ऋ वर्णस्य अ ध्वनिः श्रूयते । सृप्र शब्दात् शिप्रः[14] ऋष्धातोः रीष्मिणः[15] कृत-

१—नि० २।२
२—नि० ६।३
३—नि० २।२
४—नि० ६।४
५—नि० ६।४
६—नि० ६।२
७—नि० ३।४
८—नि० ६।१
९—नि० ३।४
१०—नि० ६।५
११—नि० ६।२
१२—नि० ६।२२
१३—नि० ५।४
१४—नि० ३।४
१५—नि० ६।४

वान् शब्दात् कितव[1] प्रभृति शब्देषु च ऋ वर्णस्य इ ध्वनिः, एवमेव आ + दधातोरादुरिः,[2] कृन्त् धातोः कुत्सः[3], नि + चम् + पृ धातो र्निचुम्पुजः[4] अप्रतिष्कुतः शब्दे कृत् धातोः कुतः[5] प्रभृति शब्देषु च ऋ वर्णस्य 'उ' ध्वनिः प्राप्यते ।

वर्ण विकारः—पदेषु एकस्मिन् वर्णस्य स्थाने अपरस्य वर्णस्यागमनं वर्णविकाररूपेण गृह्यते । एतादृशः विकारः स्वरेषु व्यञ्जनेषु वा संभाव्यते । महर्षिणा यास्केन वर्ण–विकारेषुउपधा विकारस्य प्रदर्शनं कृतम् । पदानामन्त्य–वर्णात् पूर्वोवर्णः उपधा संज्ञकः[6] । राजन् दण्डिन् शब्दयोः क्रमशः अ, इ उपधा विद्येते । अनयो रुपधावर्णयोः दीर्घी–करणेनैव राजा दण्डोति पदं भवति । दीर्घीकरणमिदं वर्णविकारः कथ्यते ।

वर्णनाशो वर्णलोपोवा—पदेषु कस्यापि वर्णस्यादर्शन-मनुपस्थितिर्वा वर्णनाश शब्देनोच्यते वर्णलोपशब्देन वा व्यवह्रियते । वर्णलोपस्तु स्वरवर्णस्य व्यञ्जन वर्णस्य च संभाव्यते । स्वरवर्णलोपस्य त्रिधा स्थितिः प्रथमतो द्रष्टव्या—

आदिस्वरलोपः—धात्वादावस्थितस्यस्वरवर्णस्य लोपः आदिस्वरलोपः । असभुंविधातोर्निष्पन्नयोः स्तः सन्ति[7] शब्दयोः धात्वादाववस्थितस्य अस्वरस्य लोपो दृश्यते ।

मध्यस्वरलोपः—धातुषुशब्देषु वा मध्यस्थितस्य स्वर-स्यलोपोमध्यस्वरलोपः, गम् धातोर्निष्पन्नयोर्जग्मतुः जग्मुः[8] शब्दयोः गम् धातोर्मध्यस्थस्य ग स्थितस्याकारस्य लोपो भवति जग्गम् + अतुस्=जग्मतुः, जगम् + उस्=जग्मुः । निरुक्ते उपधालोपस्योदाहरणे इमौ प्रस्तुतौस्तः । ( तिस्रः ) त्रि + ऋचः संयोगानिष्पन्ने तृच शब्दे त्रिस्थितस्य इ स्वरस्य र व्यञ्जनस्य च लोपो भवति । अतः अत्र इ स्वर लोपः मध्यस्वर लोपः ।

अन्त्यस्वरलोपः—पदान्तस्य स्वरस्य लोपः अन्तस्वर-लोपः । निरुक्ते प्रासंगिकमस्योदाहरणं नैवोपलभ्यते ।

व्यञ्जनवर्णलोपेऽपित्रिधास्थितिः—

आदिव्यञ्जनलोपः—पदादाववस्थितस्य व्यञ्जनवर्णस्य लोपः आदिव्यञ्जनलोपः 'आदिर्ञिटुडवः[9] । इति पाणिनेः सूत्रेणादिव्यञ्जनलोपस्य स्पष्ट संकेतो गृह्यते । धात्वादाव-नुबन्धानां ञि टु डु इत्येतेषां समुदायानामित्संज्ञाभवति यथा ञिमिदा इत्यत्र मिद् स्नेहने, टुवेपृकम्पने इत्यत्र वेपृ कम्पने डुदाञ् इत्यत्र दा दाने धातूनां दर्शनं भवति । स्कम्भ् धातोर्निष्पन्ने क्रम्भन्[10] शब्दे सादिव्यञ्जनवर्णस्य लोपो दृश्यते । आचार्ययास्केनास्य प्रासंगिकोदाहरणं नैव-समुपस्थापितम् ।

मध्यव्यञ्जनलोपः—धातावस्थितस्य पदस्थस्य वा मध्यव्यञ्जनवर्णस्य लोपो मध्यव्यञ्जनलोपः । यास्केना-स्योदाहरणे छान्दस् प्रयोगो दर्शितः । 'तत्वायामिति ।[11] शब्दे त त्वा याचामि ( तं त्वां याचामीत्यर्थः ) पदानां समुदायः । तत्रच मध्यस्थितस्य च व्यञ्जनवर्णस्य लोपे कृते यामि इति तत्वायामि । अनेन प्रकारेण त्रि + ऋचः=तृचः इत्यत्रापि त्रिस्थितस्य र मध्यवर्णस्य लोपोभवति ।[12]

अन्तव्यञ्जन–लोपः—धात्वन्तस्य पदान्तस्य वा व्यञ्जन वर्णस्य लोपः अन्तव्यञ्जनलोपः । गम् धातोः क्त्वा प्रत्यये कृते गत्वा एवं गम् + क्त प्रत्यये कृते गतमितिशब्दो भवति[13] ।

१—नि० ४।२ २—नि० ५।४ ३—नि० ६।६
४—नि० ३।२ ५—नि० ५।३ ६—नि० ६।३
७—अलोऽन्त्यात् पूर्व उपधा—अष्टा० १।१।६५ ८—'अथाप्यस्तेर्निवृत्तिस्थानेष्वादिलोपोभवति—स्तः सन्तीति' नि० २।१
९—अथाप्युपधालोपो भवति—जग्मतु जग्मुरिति—नि० २।१ १०—अष्टा० १।३।५
११—नि० २।१ १२—वैदिक वाङ्मयमें भाषा चिन्तन—पृ० ११४ १३—नि० २।१

अन्तव्यञ्जनलोपः—धात्वन्तरस्य पदान्तस्य वा व्यञ्जनवर्णस्य लोपः अन्तव्यञ्जनलोपः गम् धातोः क्त्वा प्रत्यये कृते गत्वा एवं गम् + क्त प्रत्यये कृते गतमिति शब्दो भवति।[1] अत्र गम् धातोरन्तस्थस्य म् व्यञ्जन वर्णस्य लोपो दृश्यते। एवमेव कीकटशब्दे किम् + कृ इत्यत्र किमः मस्य लोपो भवति[2]। हन् हिंसा गत्योः धातोर्निष्पन्ने अघः शब्दे धातौस्थितस्य न् व्यञ्जनवर्णस्य लोपो दृश्यते[3]।

अपश्रुतिः—पदेषु व्यञ्जन वर्णानां यथावत् स्थितावपि आन्तरिक स्वर परिवर्तनेन अर्थेष्वपि परिवर्तनं जायते। भाषावैज्ञानिक क्षेत्रे स्थितिरियमपश्रुतिः शब्देन व्यवह्रियते। इयं स्थितिः स्वरविकारः, स्वरवर्णक्रमावस्थानं, वर्णश्रेणीकरणं सम्प्रसारणादि रूपैराख्यायते। आंग्लभाषायां भावेलग्रेडेशन (Vowel Gradation) अब्लाउट (Ablaut) प्रभृतिशब्दाः नितरामस्याः कृते प्रचलिताः सन्ति। भरद्वाज शब्दात् भारद्वाजः, शिव शब्दात् शैवः, यस्क शब्दात् यास्क प्रभृति शब्दा उदाहरण स्वरूपाः सन्ति। ऐतेषु पदेषु सर्वेव्यञ्जनवर्णाः यथावदवस्थिताः सन्ति परमाद्यस्वर परिवर्तनेन दीर्घीकरणेन वा अर्थेष्वपि भिन्नतासमागता। परिणामतो भरद्वाज इति शब्दः भरद्वाजस्य पुत्रः शैव इति शब्दः शिवधर्मोपासकः एवं यास्क इति शब्दः यस्कस्य पुत्रः इति प्रकृत शब्दस्यार्थभिन्नतां द्योतयति। अपश्रुतिः द्विधा-मात्रा सम्बद्धा गुणसम्बद्धा च[4]। मात्रा सम्बद्धाऽपश्रुतिः ह्रस्वदीर्घात्मिकाऽपश्रुतिरपि कथ्यते। ह्रस्वदीर्घप्लुतैः सम्बद्धा मात्रा भवति।[5] गुणवृद्धिरपि इयमेव। संस्कृत भाषायां मात्रा सम्बद्धाऽपश्रुतिरेव प्रायेण दृश्यते। अत्रशब्दानां परिमाणात्मकं परिवर्तनं भवति। परिवर्तनमिदं गुणवृद्धि सम्प्रसारणादिजन्यं विद्यते।

गुणीय परिमाणात्मकं परिवर्तनम्—अस्वरादुत्पन्नाः ए ओ अर् विकाराः गुणरूपेणोच्यन्ते। यास्कः शेव शब्दस्य निर्वचनमत्र प्रस्तौति—"शेव इति सुखनाम शिष्यतेर्वकारो नामकरणोऽन्तस्थान्तरोपलिङ्गी। विभाषितगुणः[6]" शिष् हिंसायामितिधातोः व प्रत्यये कृते ष् वर्णस्य लोपो भवति तथा विकल्पेन गुणः सञ्जायते परिणामतः शेव इति अन्यथा शिवः स्यात्। एवमेव-गुणीयपरिमाणात्मकं परिवर्तनं यथा—

ई-ए वी धातुः वयाः शाखाः वेतेः वातायनाः[7]
उ-ओ धुष् धातुः घोषः घुष्यतेः[8]
ऋ-अर् कृ धातुः कर्मन् कर्मकस्मात् क्रियते इति सतः[9] वृद्धिः-आ, ऐ, औ, आर विकाराः वृद्धिरूपेणोच्यन्ते[10]। निरुक्तोद्धृतान्युदाहरणानि निम्नलिखितानि प्रस्तूयन्ते—

अग्निः — आग्नेयः[11] अ—आ
अदितिः—आदित्यः आदितेयः[12] अ—आ
भगः—भागानि[13] अ—आ

१—नि० २।१ २—नि० २।१ ३—नि० २।१
४—कीकटाः किं कृताः—नि० ६।६
५—'अघं हन्तेर्निर्ह्रसितोपसर्गः आहन्तीति'—नि० ६।३
६—भाषाविज्ञान—(भोलानाथ तिवारी)-पृ० ४०५
७—याज्ञ० शि०–१५ ८—अदेङ् गुणः-अष्टा० १।१२
९—नि०-१०।२ १०—नि० १।२ ११—नि० ६।१
१२—नि०१।६ १३—नि० वृद्धिरादैच् अष्टा० १।१।१

सवितृः सावित्राणि[1] अ–आ

विश्वानरः वैश्वानरः[2] इ—ऐ

विद्युत् — वैद्युत[3] इ—ऐ

विष्णुः — वैष्णवः[4] इ—ऐ

उत्तम — औत्तमिकानि[5] उ—औ

पूषम् — पौष्णानि[6] उ—औ

उशिजः पुत्रः–औशिजः[7] उ—औ

ऋष्टिषेणस्य पुत्रः आर्ष्टिषेणः[8] ऋ–आर्

सम्प्रसारणम्— य व र ल वर्णानां क्रमशः इ उ ऋ लृ विकाराः सम्प्रसारणरूपेणोच्यन्ते ।[9] आचार्ययास्कः अनया प्रक्रियापूर्णपरिचितः आसीत् । य व र ल वर्णानां इ उ ऋ लृ स्वरगतरूपाः इमे चत्वारः ध्वनयः व्यञ्जनसत्वेऽपि स्वरवत् कार्यं सम्पादयन्ति । आंग्लभाषायां इमे Semi Vowel शब्देनाख्यायन्ते । निरुक्ते सम्प्रसारणस्योदाहरणानि यथा—

यज् – इष्टम् – इष्ट्वा[10] य–इ

अव् – उतिः[11] व–उ

वश् – उशिजः[12] व–उ

म्रद् – मृदुः[13] र–ऋ

प्रथ् – पृथुः,[14], प्रष् पृषतः र–ऋ

प्रथ् – पृथक्,[15] पृथिवी[8] र–ऋ

ध्वनिपरिवर्तनस्य सिद्धान्तान् वैयाकरणा अपि स्वीकुर्वन्ति । ध्वनिपरिवर्तनेन शब्देषु रूपात्मकं परिवर्तनं जायते । रूपात्मकपरिवर्तनेनार्थात्मकं परिवर्तनमपि भवत्येव । अतएव वैयाकरणाः तद्धितस्त्री प्रत्ययादीनां विधानं कृतवन्तः । तद्धितान्त प्रभृति शब्देषु ध्वनेर्विकारः निरुक्ताचार्योऽपि ध्वनिपरिवर्तनस्यावस्थायां समुपस्थापयन्ति । चाप्, टाप्, डाप्, ङीप् ङीष् प्रभृति स्त्री प्रत्ययानां संयोगात् निष्पन्ना स्त्रीप्रत्ययान्ताः शब्दा ध्वनिविकार युक्ताः अर्थान्तरतां व्यञ्जयन्ति । परिणामतो बालक–बालिका, अश्व-अश्वा, नर्तक-नर्तकी, सारङ्ग-सारङ्गी प्रभृति स्त्रीलिङ्गशब्देषु रूपान्तरे सति अर्थान्तरमपि स्पष्टमेव दृश्यते । एवमेव दशरथ–दाशरथिः, शक्ति–शाक्तः, शिव–शैवः, गणपति–गाणपतम् प्रभृति तद्धितान्त शब्देष्वपि ध्वनिपरिवर्तनमर्थपरिवर्तनञ्च दृश्यते । अत्र प्रत्ययजन्य–विकारा विद्यन्ते । निर्वचन प्रक्रियामां व्याकरणाभिमताः शब्दाः स्वरसंस्कारयुक्ताः निरुक्तकारैरपि स्वीकृताः ।[15] परमविद्यमानेवृत्तिसामान्येऽप्यक्षरवर्णसामान्यात् निर्वचनं कर्तव्यमिति निरुक्तकारसमादृतः ।[16]

---

१—नि० १।६
२—नि० २।४
३—नि० ७।६
४—नि० ७।६
५—नि० ७।६
६—नि० १४
७–नि० ७।३
८—नि० ७।६
९—नि० ७।६
१०–नि० ६।३
११—नि० २।३
१२—इग्यणः सम्प्रसारणम्–अष्टा० १।१।४५
१३—नि० २।१
१४—नि० २।१
१५—नि० ६।३
१६—नि० २।१

काव्येन डा० रुद्रदेवत्रिपाठिनामाधुनिकसत्यनारायणकथया च सविशेषं सहृदयानां मनोरंजनमभूत्। यैर्गम्भीर-भावविशेषसम्पन्नश्च काव्यपाठः सम्प्रस्तुतस्तेष्वासन् डा० वर्णेकरः, डा० रेवाप्रसादद्विवेदी, पं० बटुकनाथशास्त्रीखिस्ते, आचार्यप्रियव्रतशर्मा, पं० रतिनाथझा, डा० शिवदत्तशर्मा, पं० नरसिंहाचार्युलुः, चन्द्रभानुत्रिपाठीच।

कविसम्मेलनात् पूर्वम् समुपस्थितैः कविभिरनौपचारिकी कविगोष्ठी कृता, यस्यां हास-परिहासात्मकमाकलनीयं दृश्यमासीत्। डा० वर्णेकरमहोदयेन सम्मेलनस्य संचालनं कृतम्, जगन्नाथपाठकेन च साहाय्यं प्रदत्तम्। डा० ब्रह्ममित्रअवस्थिमहोदयेन धन्यवादज्ञापनं कृतम्।

पर्यन्ते नृत्यगीतमयः संक्षिप्तः कार्यक्रमः सम्प्रस्तुतः। तत्र सरस्वतीवन्दना कु० पार्वती चट्टोपाध्यायया प्रस्तुता, सरस्वत्या अभिनयः कु० बन्दनामालवीयया कृतः। गीतगोविन्दस्य डा० माया-मालवीयया गीतं पद्यमाश्रित्य कु० वीणाशुक्लया भावनृत्यं कृतम्।

डॉ० गयाचरणत्रिपाठिनः
प्राचार्याः

# सांस्कृतिककार्यक्रमाणां समायोजनम्

वाराणस्यां मार्चमासस्य २५, २६, २७ त्रिषु दिनाङ्केषु सार्वभौमसंस्कृतप्रचारकार्यालयेन त्रयः कार्यक्रमाः समायोजिताः। एषु त्रिषु कार्यक्रमेषु प्रथमदिवसे सुस्वरश्लोक-पाठप्रतियोगिता समायोजिता आसीत्। यस्यां विभिन्नानां संस्थानां त्रयस्त्रिंशद् बालकबालिकाभिः उत्तरशैल्याम् एवं दक्षिणशैल्यां विभिन्नछन्दसां सुस्वरः संगीतमयश्च पाठः कृतः। तस्य कार्यक्रमस्य अध्यक्षता डा० प्रेमलता शर्मणा कृता तथा उद्घाटनं डा० कमलेशदत्त त्रिपाठिना कृतम्। कार्यक्रमस्य मुख्यातिथिना श्री जे. एन द्विवेदिना ( विकासप्राधिकरणसचिवेन ) बालकबालिकाभ्यः आशीर्वचनं प्रदत्तम्।

द्वितीयदिवसे समायोजिते श्रीजयदेव संगीतसमारोहे विभिन्न शैलीषु गीतगोविन्दस्य गीतानां गायनमभवत् श्री सीतारामत्रिपाठी भोजपुरी शैल्यां, श्री राधाकान्तओझाः मैथिली शैल्यां, श्री हरेकृष्णमेहेर उत्कलशैल्यां, श्रीकृष्णकान्तशर्मा असमिया शैल्यां, श्री ऋत्विकसान्यालः वंगीयशैल्यां श्री कृष्णः कर्नाटक शैल्यां, श्री पं० बलवन्तरायभट्टश्च उत्तर भारतीय शैल्यांच गीतानि प्रस्तुतवन्तः। समारोहस्य अध्यक्षता डा० प्रेमलताशर्मणा कृता, मुख्यातिथिः मा० शरदवल्लभावेटीमहोदया भक्तिसंगीतविषये भाषणं कृतवती। अस्मिन् शुभावसरे आगामिनि वर्षे विशेषसमारोहेण सह श्रीजयदेवजयन्तीमायोजयितुं निश्चयः कृतः। तृतीयदिवसे सम्पन्नायाः हास्यविनोदगोष्ठ्याः अध्यक्षता डा० वागीशशास्त्रिणा तथा उद्घाटनम् डा० रेवाप्रसादद्विवेदिना कृतम्। गोष्ठ्याः मुख्यातिथिः श्री वी० सुन्दरलिङ्गम् ( मलेयेशिया निवासी ) हास्यरसस्य तथा तस्मिन् विदूषकस्य भूमिकाविषये विशेषरूपेण व्याख्यानं कृतवान्। अन्ते वाराणस्याः विशिष्टसंस्कृतकविभिः हास्यरसस्य प्राचीनानां नवीनानां च संस्कृतकवितानां पाठः कृतः, अस्यां गोष्ठ्यां निम्नाङ्किताः कवयः समुपस्थिताः आसन् श्रीविनयमिश्र, श्रीरमाकान्त पाण्डेयः, श्री केदारनाथ त्रिपाठी, श्री शिवजी उपाध्यायः, श्री डा० शिवदत्तशर्मा चतुर्वेदः, श्री वासुदेवद्विवेदी शास्त्री, श्री जनार्दनपाण्डेय, श्चेति। अन्त अन्ततः श्री वागीशशास्त्रीमहोदयैः हास्यविनोदपूर्णाः विविधाः कविताः श्रावयित्वा सर्वेषांभृशं मनोरञ्जनं विहितम्।

उक्त समारोहेषु आगतानामतिथीनां स्वागतं श्री वासुदेवद्विवेदीशास्त्रिणा तथा कार्यक्रमस्य संचालनं डा० कपिलदेव पाण्डेयेन कृतम्। सुमधुरप्रीतिपेयेन सह सभायाः विसर्जनं जातम्।

वृन्दावन विहारी दासः

पञ्जीकृत-संख्या—एल० आर० एन०/१०२

# सूर्योदयस्य नियमाः

पत्र संहिता—

१—'सूर्योदयः' मासिकपत्रस्य वार्षिकं शुल्कं रूप्यकदशकं वर्तते। धनादेश-( मनीआर्डर ) द्वारा तत्प्रेषणीयम्। वी० पी० पी० द्वारा प्रेषणे ३।०० पृथक् प्रदेयानि स्युः।

२—आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते। नवीनप्रथमाङ्कतः ( जनवरी अंकतः ) एव ग्राहकत्वं स्वीक्रियते। माध्यमिकेन केनापि अंकेन न स्वीक्रियते।

३—आंग्लमासस्य २६ तमे दिनांके 'सूर्योदयः' प्रकाशितो भवति। वारद्वयं संशोध्य ग्राहकेभ्यः सः प्रेष्यते। अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निर्णयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः।

४—लेख-कवितादीनां भाषया संयतया, सरलया शुद्धया च भाव्यम्। प्रकाशनीयलेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम्। अस्वीकृता लेखादयः पोस्टविभागीय चिटिका-( टिकट ) प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते।

५—सम्पादकीय-विषयसम्बन्धे पत्रव्यवहारे 'सम्पादकः' इति, व्यवस्था-विभागीय पत्रव्यवहारे च व्यवस्थापकः इति च स्पष्टं लेखनीयम् येन उत्तरलाभे मुधा विलम्बो न भवेत्।

विज्ञापनशुल्कम् —

सूर्योदये सुरुचिपूर्णं विज्ञापनं प्रकाश्यते। एकवारं तस्य प्रकाशनस्य शुल्कक्रमश्च अधोलिखितोऽस्ति, सार्वकालिकस्य दीर्घकालिकस्य च विज्ञापनस्य कृते विशेष सौविध्याय पत्रव्यवहारः कार्यः।

| | | | |
|---|---|---|---|
| साधारणस्य प्रतिपृष्ठम् | १००) | साधारणस्य प्रत्यर्धपृष्ठम् | ६०) |
| साधारणस्य चतुर्थांशपृष्ठस्य | ३५) | आवरण-चतुर्थपृष्ठस्य | २००) |
| आवरण-तृतीयपृष्ठस्य | १५०) | प्रथमद्वितीयावरणपृष्ठयोः विज्ञापनं न स्वीक्रियते। | |

– सङ्केतः –

**'सूर्योदयः'-कार्यालयः, भारतधर्ममहामण्डलम्, लहुरावीर, वाराणसी-१**

सम्पादकः, प्रकाशकः, मुद्रकश्च—डॉ० परमहंस मिश्रः,
श्रीभारतधर्ममहामण्डलम् लहुरावीर, वाराणसी-२२१००१
मुद्रण-स्थलम्—हनुमान मुद्रण यन्त्र,
पियरी कलाँ वाराणसी।

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य मासिकं संस्कृतमुखपत्रम्

५८ तमे वर्षे ] ❋ वाराणसी ❋ { जुलाई--अगस्त--सितम्बर १९८१ श्रावण--भाद्रपदाश्विनाः २०३८ } ❋ संयुक्ताङ्कः-७-८-९


❋

[ जयतु सुरभारती ]

❋


वार्षिकं मूल्यम्

दशरूप्यकाणि

१०/००

प्रत्येकाङ्कस्य

एक रूप्यकम्

१/००

आजीवन शुल्कम्

शतं रूप्यकाणि

१०१/००



सम्पादकः

डॉ० परमहंसमिश्रः


## भवः

अपेक्ष्यते चेद् विभवो भवे भवे महेश्वरत्वं जनने यदीष्यते ।
भवाप्ययक्लेशशमोऽपि काम्यते बिभाव्यतां भक्तिमता तदा भवः ॥

पिबन् प्रियोत्फुल्लमुखाम्बुजासवं दृशादहन् विश्वविजित्वरं स्मरम् ।
गजाननं स्मेरमुखं षडाननं प्रमोदयन्नस्तनुतां शिवं भवः ॥

त्रिलोककल्लोलाकवल्ली कृतौ हरो जगत्त्रयी सक्षरक्षणे शिवः ।
अनन्तवैचित्र्य विलास बन्धुर प्रपञ्च निर्माण विधौ भवान् भवः ॥

जुहोति यो भाल विलोचनानले कलं जगद्बीजमपीह मन्मथम् ।
समस्य लिप्तोऽप्यघभस्मकारकः पुनर्भवं भस्म करोतु मे भवः ॥

कृपाकन्दे मन्देष्वपि सकरुणे पीतगरले,
चिताभस्मस्नातेऽप्यतिशयपवित्रे स्मरहरे ।
प्रियाश्लिष्टे सृष्टि—स्थितिलयविलासेऽहिवलये,
भवे प्रीते शाम्यत्यखिलभवबाधापरिभवः ॥

रच०—श्रीमान् रतिनाथ झाः

प्राणः प्रजानामुदयत्येष सूर्यः

शत० ६।७।६।२०

# विषय-सूची



# सुवर्णक्षीरिणी

## महाकविः माया प्रसादः त्रिपाठी

क्षीरिणी किं वदति पाटलीप्रार्थना
वर्त्मना वन्दिता कण्टकीयाचना
चान्द्रिकार्चिता चन्दनैश्चञ्चिता
शाद्वलैः प्रेङ्खिता छद्मिनी साधना । १ ।

मरकतैर्भूषिता मृत्तिकामन्त्रिणी
उपवनैश्चुम्बिता स्पर्शसुखयन्त्रिणी
पत्रिकाकरधृता माधवी कामिनी
प्राङ्गणे कानने कुन्तला यामिनी । २ ।

चातकोपेक्षिता कोकिलैर्भर्त्सिता
किं च जयदेव मधुराक्षरै विस्मृता
ग्राम विजने च मे पल्वलीसहचरी
रोधने मार्गणे इङ्गितैः संप्लुता । ३ ।

व्यर्थताकेतना जातवी मानवी
वेदनाहारिणी वेदनाभाविनी
अप्रभंशच्छविर्देवतामनुगवी
तर्कशंसिर्यता प्रांशुतानुपदवी । ४ ।

स्वागता ! स्वागता ! द्वारि च विडम्बना
रागिणी दंशिनी निर्वृतिर्लम्बना । ५ ।

# सूर्योदयः

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्

तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन्।

विद्वत्कोकमशोकयन् नवसुधीरोलम्बमुन्मीलयन्,

सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः॥

५८ तमे वर्षे ] * वाराणसी * जुलाई-अगस्त-सितम्बर सन् १९८१ [ अङ्कः { ७ ८ ९
* संयुक्ताङ्कः * श्रावण-भाद्रपदाश्विनाः सं० २०३८

## * लोकानां वरदा भव *

विश्वेश्वरि ! त्वं परिपासि विश्वम्,

विश्वात्मिका धारयसीति विश्वम्।

विश्वेश-वन्द्या भवती भवन्ति,

विश्वाश्रया ये त्वयि भक्तिनम्राः॥

देवि ! प्रसीद, परिपालय नोऽरिभीते—

नित्यं यथासुरवधादधुनैव सद्यः।

पापानि सर्वजगतां प्रशमं नयाशु,

उत्पातपाकजनितांश्च महोपसर्गान्॥

प्रणतानां प्रसीद त्वं देवि ! विश्वार्त्तिहारिणि।

त्रैलोक्य वासिनामीड्ये ! लोकानां वरदा भव॥

दुर्गासप्तशत्यां ११।३३-३५

# 卐 श्रीशक्तिगीता 卐

भगवत्पूज्यपादाः महर्षयः स्वामिनः ज्ञानानन्दगुरुवर्याः

[ चित्कलाविज्ञानयोगवर्णनम् ]

अन्तिकं नृंश्च मे नेतुं नितरामग्रगामिनः ।
व्याप्ताप्यस्यांकलारूपात् जगत्यां सर्वतः सुराः ।। २५ ।।

अद्वितीयाहमेकास्मि शुद्धा बुद्धा च शाश्वती ।
सीमा नास्त्येव भो देवाः, कलाविश्लेषणस्य मे ।।२६।।

शक्तेर्मय्यवतिष्ठन्ते कलाः षोडश सर्वदा ।
अतोऽहं सर्वशक्तीनामस्म्याधारस्वरूपिणी ।। २७ ।।

कलारूपैः कलापूर्णा, शक्तिः मे साऽश्नुते जगत् ।
तस्यास्तासां कलानां तु, वित्त भेदाननेकशः ।। २८ ।।

ममैवैका कला शक्तेरुद्भिज्जेषु विकासते ।
स्वेदजेषु कलाद्वैतमण्डजेषु कलात्रयम् ।। २९ ।।

चतस्रश्च कला भान्ति जरायुजगणेऽखिले ।
पञ्चकोषप्रपूर्णत्वान्मर्त्येषु प्रायशोऽमराः ।। ३० ।।

आकला पञ्चकादष्ट कला नूनं चकासति ।
नवारभ्य कला यावत् षोडशंमे यथायथम् ।। ३१ ।।

संविकाश्यावतारेषु नानाकेन्द्रोद्भवेषु च ।
कुत्रचिन्मे प्रपूर्यन्तेऽवतारे पूर्णसंज्ञके ।। ३२ ।।

मच्छक्तेः षोडशानान्तु कलानामस्ति पूर्णता ।
मदाज्ञारूपधर्मेऽतो ज्ञेयः धर्मः सनातनः ।। ३३ ।।

अस्म्यतः सर्वधर्माणामाश्रयस्थलमुत्तमम् ।
स्थूलसूक्ष्मात्मकं विश्वं समस्तं सचराचरम् ।।३४।।

मदादेशात्मको धर्मो नित्यमेव विभर्त्ति सः ।
धर्मशक्तेर्हि मे पूर्णाः कलाः षोडशसंख्यकाः ।।३५।।

आर्यजातीय-धर्मेषु विद्यन्ते विबुधर्षभाः ।
आर्यजातिरतोऽन्यासामस्त्याद्यः शिक्षको गुरुः ।। ३६ ।।

आर्यधर्मोऽन्यधर्माणां जनकः पालकोऽस्ति च ।
नात्र कश्चन सन्देहो विद्यतेऽदितिनन्दनाः ।। ३७ ।।

सम्पादकीयम् —

# परमाम्बायाः परानुकम्पा

सूर्योदयोऽयं प्रकाश्यते सम्प्रति विलम्बात् । अतएवाङ्कोऽयं संयुक्ताङ्कः जुलाई–अगस्त–सितम्बर मासत्रयान्तरालालवालामृततृप्तिप्रतीकः । श्रावण–भाद्रपदाश्विनेषु धनरसघनसारसौरभ्येन भरितं जगत् कादम्बिनीसम्पातपीयूषरसाभिषिक्तं सत् स्वकीयम् अस्तित्वं तोषयति । विविधव्रतोत्सवसमवायसमन्वितस्यास्य कालान्तरालस्यान्तिमे मासार्द्धे शुक्ले पक्षे समायाति शारदनवरात्रस्य प्रमोदामोदमाङ्गलिकः विशेषकालिकविकल्पकलङ्कप्रक्षालकः परमाम्बासमुपासनामहोत्सवमुहूर्त्तसमन्वितः शुभ्रवासरव्रजः !

संस्कृतज्ञाः सर्वे असंस्कृतज्ञाश्च बहुशः शुभसंस्कारसंस्कृतशेमुषीकाश्च भारतीयाः स्व-स्व-सम्प्रदायसिद्धान्तमनुसृत्य समुपासन्ते वात्सल्यामृतस्तन्यपायिनीं परमाम्बाम् जगदम्बिकाम् ।

जिजीविषा स्वभावसिद्धा भवति सर्वदेहिनाम् । श्रुतिरपि समुद्घोषयति शतं वर्षाणि यावत् जीवितुम्—

'पश्येम शरदः शतं, जीवेम शरदः शत (ग्वं) शृणुयाम शरदः शतं, प्रब्रवाम शरदः शतम्, अदीनाः स्याम शरदः शतं, भूयश्च शरदः शतात्' । मन्येऽस्मिन् जिजीविषायाः समुद्दामसमीहा समुल्लसति । जीवितुं समीहैव जिजीविषा भवति । एषा समीहा 'जीवन्नरः भद्रशतानि पश्येत्' इति लोकोक्तिमाश्रित्य वर्द्धते । किन्तु विचारणीयोऽयं विषयः यत् किम् जीवनम् समीहाधीनं सम्भाव्यते ? निश्चप्रचं नकारात्मकमेव समाधानम् । जीवनं मरणं वा विध्यधीनं भवति, पराधीनं वा भवति, तदपि जीवितुम् आकाङ्क्षा तु शश्वज्जाग्रत्येव जगति !

प्रश्नः उदेति किमिदं जगत् ? गच्छति गच्छतीति जगत्, निरन्तरं गमनशीलं ऋतं सत्यं चासच्च जगत् भगवत्याश्चिते : स्वातन्त्र्यात्मकस्य चमत्कारस्य पृषन्मात्रम् किञ्चित् तत्वात्मकं रूपम् । प्रत्यभिज्ञाहृदये क्षेमराज आचष्टे- 'चितिः स्वतन्त्रा विश्वसिद्धिहेतुः' विश्वस्य सिद्धेः अस्तित्वस्य हेतुः कारणम् स्वतन्त्रा भगवती चितिरेवेति । चितिरेव संवित् । संविद्विषये महामहेश्वराचार्यवर्यः अभिनवगुप्तपादाचार्यः स्वकीये तन्त्रालोकग्रन्थे, ग्रथ्नातीत्थम्—

'प्राक् संवित् प्राणे परिणता' । तं. ६।१२ एतत्पूर्वमेव तेनोट्टङ्कितमेकत्र यत् 'इदमेव हि संविदः संवित्त्वं, यत्सर्वमामृशति ।' तं० ४।१८४ । अर्थात् भगवती संविद्रूपा-पराशक्तिरेव प्राणे परिणता सती प्राणिनां शरीरे प्राणान् संचारयति । शरीरमिदं शवमात्रम् । शवाधिष्ठितशकारे यदा इकारस्यानुप्रवेशो भवति तदैव शवः शिवः भवति, जीवति, शिवतामेति । विचार्य्यते इकारविषये । 'इ' कारः वर्णात्मिका मातृकाशक्तिः । मातृकासु पञ्च आद्य स्वराः अ, इ, उ, ऋ, लृ रूपाः सूर्यस्वराः । दीर्घत्वमेत्य आ, ई, ऊ, ॠ रूपाः चान्द्रस्वराः भवन्ति । एतेषां स्पन्दनेन अर्थबोधः भवति । तत्र अकारः शिवः, आकारः आनन्दः, 'इ'कारः इच्छा, ई कार ईशितृता, उकारः उन्मेषः, ऊ कारः ऊर्मिः, एतेषां त्रयाणां ह्रस्वत्वे दीर्घत्वे चैतादृशः अर्थस्पन्दः भवति । एतदनुसारं शिवस्य इच्छाशक्तिरेव विश्वम् उन्मिषति । अर्थात् शिवशक्त्योरुन्मेष एव एष संसारः । तत्र शक्तिरेव प्रधानतः विश्वम् उन्मेषयति । विश्वात्मतैव प्राणत्वमिति । यथा—

विश्वात्मता च प्राणत्वं देहे वेद्यैकतानता ।
तेन प्राणपथे विश्वाऽऽकलनेयं प्रवर्त्तते ॥तं० ६।४५

अस्यां विश्वाकलनायाम् शक्ति विना न किमप्यवशिष्यते । सैव विश्वप्रसूः । अत एव जगन्माता सा जगदम्बिका परमाम्बा समुदीर्यते ।

अस्मिन् शारदे नवरात्रे तस्या एव परमाम्बायाः समुपासनं क्रियते। सर्वेषां प्राणिनां मायया एव भासमानानां बाह्यत्वात् या बहिस्थितिः दृश्यते, तस्य एव चिन्मयत्वे अन्तः विलापनम् उपासना भवति--

चिन्मयत्वेऽवभासानामन्तरेव स्थितिः सदा।
मायया भासमानानां बाह्यत्वाद्बहिरप्यसौ॥
ई० प्र० वि० १।८।७

एतदर्थं जगदम्बिकायाः स्तोत्रपाठः, स्तुतिः ध्यानं पूजनार्चनादिकं च क्रियतेऽस्मिन् शुक्ले शरद्दताविति— भक्तः कथयति—

तव च का किल न स्तुतिरम्बिके,
सकलशब्दमयी किल ते तनुः।
निखिलमूर्त्तिषु मे भवदन्वयः
मनसिजासु बहिः प्रसरा सु च॥
इतिविचिन्त्यशिवे शमिताशिवे
जगति जातमयत्नवशादिदम्।
स्तुति-जपार्चन-चिन्तनवर्जिता
न खलु काचन कालकलास्तु मे॥

भक्तः समीहते यत् तस्य जीवनस्य काचनापि कालकला स्तुति-जप-अर्चन-चिन्तनवर्जिता मा स्यात्। इयमवस्था तु भक्तशिरोमणीनां भवति, किन्तु बाह्यत्वात् मायया बहिः स्थितानां नाना मायात्मक प्रपञ्चपातित्यसंप्राप्ते जगज्जंजाले स्थितानां संस्कारसम्पन्नानां भक्तानां कृते अयं शारदनवरात्रमहोत्सवः महत्त्वपूर्णः भवति। माता परमाम्बा स्वयमेव समुदीरयति—

शरत्काले महापूजा क्रियते या च वार्षिकी।
तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्तिसमन्वितः॥
सर्वाबाधाविनिर्मुक्तो धनधान्य सुतान्वितः।
मनुष्यो मत्प्रसादेन भविष्यति न संशयः॥
श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः।
पराक्रमं च युद्धेषु जायते निर्भयः पुमान्॥
रिपवः संक्षयं यान्ति, कल्याणं चोपपद्यते।
नन्दते च कुलं पुंसां माहात्म्यं मम शृण्वताम्॥

इदं मातुः माहात्म्यम् मार्कण्डेय पुराणे सन्दब्धम् अस्ति। तस्यैव पृथक् प्रकाशनं 'श्री दुर्गासप्तशती' इति उच्यते। अस्याः सप्तशत्याः पाठेन सकामाः—

'यं यं चिन्तयते कामं तं तं प्राप्नोतिनिश्चितम्, इत्युक्त्या निश्चप्रचं सर्वमभिलाषितमधिगतं कुर्वन्ति। निष्कामाश्च भक्ति समुपलभ्य स्वर्गमपवर्गंवा प्राप्नुवन्ति। यथा महर्षिः मेधाः कथयति राजानं सुरथम्—

तामुपैहि महाराज, शरणं परमेश्वरीम्।
आराधिता सैव नृणां भोगस्वर्गापवर्गदा॥

अर्थात् सा एव पारमैश्वर्यस्वतन्त्रा भगवती दुर्गा भक्तान् विपद्पारावारात् निस्तारयति। अतएव सा सर्वैः सर्वदा समाराध्या इति। इयं नवरात्रस्य नवाहर्निशव्यापिनी मङ्गलमयी वेला भवति। तत्र सर्वैः समाराध्य मातरम् जीवनं सफलं विधेयमेव। स्मरणमात्रेणापि सा माता कृत्स्नान् विघ्नान् सद्य एव विनिवारयति। उक्तं वर्त्तते—

दुर्गे स्मृता, हरसि भीतिमशेषजन्तोः,
स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
दारिद्र्य-दुःख-भयहारिणि का त्वदन्या,
सर्वोपकारकरणाय सदार्द्रचित्ता॥

एतादृशी दारिद्र्यदुःख-भय हारिणी माता सर्वदैव पुत्राणां पापानामपाकरणे प्रवृत्ता वर्त्तते—यतः सा सदा करुणया आर्द्रचित्ता भवति।

देव्यथर्वशीर्षे एका लघ्वी किन्तु परमाह्लादपरिपूर्णा कथा वर्त्तते। एकदा सर्वे देवा देवी मुपतस्थुः अपृच्छंश्च सर्वे-कासि त्वं महादेवीति? देवानां प्रश्नोत्तरे साऽब्रवीत्-अहं ब्रह्मस्वरूपिणी। ब्रह्मस्वरूपाख्याने विस्तरेण तयाऽऽत्मपरिचयः समुपस्थापितः। प्रसन्नाः देवाः अब्रुवन्—

नमो देव्यै महादेव्यै शिवायै सततं नमः।
नमः प्रकृत्यै भद्रायै नियताः प्रणता स्म ताम्॥

प्रार्थनानन्तर देवैरुद्घोषितं यत् इयमेवमाता दुर्गा दुराचारविघातिनी संसारार्णवतारिणी अस्ति।

सम्प्रति संसारे महती व्यथा प्रथिता वर्त्तते। परस्परमविश्वस्ताः सर्वे स्वात्मनः कल्याणं प्रत्यपि प्रमादपरिपूरिताः दृश्यन्ते। अस्माकीनाऽऽदर्श-भारतीयपरम्परा दुर्दशाग्रस्ता दृश्यते। दुराचारस्य संवर्द्धनं क्रियते कार्यते च सर्वैः। एतस्यामवस्थायां दुराचारविघातिनी परमाम्बा एव शश्वत् स्मरणीया वर्त्तते।

सूर्योदयस्तु तस्या एव महाप्रकाशात्मिकायाः अनुकम्पया मरीचिमूर्द्धन्यः सन् प्रकाशते। सैव शाश्वतमवतादस्मानिति शम्।

# तन्त्रालोकः

श्रीमन्महामहेश्वराचार्याभिनवगुप्तपादाचार्यविरचितः

अत एवाह—

अहमित्थमिदं वेद्मीत्येवमध्यवसायिनी ।
षट् काञ्चुकाविलाणूत्थ प्रतिबिम्बनतो यदा ।३९।
धीर्जायते तदा तादृग् ज्ञानमज्ञानसंज्ञितम् ।
बौद्धं तस्य च तत्पौंस्नं पोषणीयं च पोष्टु च ।४०।

अस्याश्चैवमध्यवसाययोगित्वे हेतुः षट्कञ्चुक इति। षट्कञ्चुकैः—

'कालकलानियतिबलाद्रागाविद्यावशेन संबद्धः ।
अधुनैव किंचिदेवेदमेव सर्वात्मनैव जानामि ।
मायासहितं कञ्चुकषट्कमणोरन्तरङ्गमिदमुक्तम् ॥'
( प० सा० १६ उ० १७ )

इत्यादिना निरूपितस्वरूपैः 'आविलः' प्रतिनियतज्ञत्वकर्तृत्वाद्युत्पत्त्या म्लानप्रायो योऽसौ 'अणुः' परिमितात्मा, ततो जातात् 'प्रतिबिम्बनात्' चिच्छायासंक्रमणाद् इत्यर्थः। एवं ह्यस्याः पुंबोधव्यक्तिभूमित्वादेवंस्वभावो भवेत् इति भावः। 'तादृक्' इति एवमध्यवसायरूपम्। अनयोश्च परस्परं कार्यकारणभावं दर्शयितुमाह- 'तस्य' इत्यादि, 'तस्य' इति बौद्धस्य, 'पौस्नं' पुंसि भवं- पौरुषम् इत्यर्थः। 'पोषणीयं' कार्यम् इत्यर्थः। कामशोकाद्यावेशभाजो हि तन्मयतानुसंधानादिना तत्तदर्थसाक्षात्कारात्मकमविकल्पकं ज्ञानमुदियात् । यदाहुः—

'कामशोकभयोन्मादचौरस्वप्नाद्युपप्लुताः ।
अभूतानपि पश्यन्ति पुरतोऽवस्थितानिव ॥'

इति। 'पोष्टृ' इति कारणम्। स्वप्नादावपि अनुभव एव हि प्राच्यो निमित्तं, नहि नारिकेलद्वीपवासिनो वह्निविकल्पादाविच्छापि भवेत् ॥३९॥४०॥

एवमज्ञानं निरूप्य, ज्ञानमपि द्विविधं निरूपयितुमाह—

क्षीणे तु पशुसंस्कारे पुंसः प्राप्तपरस्थितेः ।
विकस्वरं तद्विज्ञानं पौरुषं निर्विकल्पकम् ॥४१॥
विकस्वराविकल्पात्मज्ञानौचित्येन यावसा ।
तद्बौद्धं यस्य तत्पौंस्नं प्राग्वत्पोष्यं च पोष्टृ च ॥४२॥

पशोराणवस्यापि वासनामात्रक्षयाभिधानात् 'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति न्यायेन कार्ममायीययोरपि प्रक्षयान्निवृत्तनिखिलबन्धस्य 'पुंसः' अत एव प्राप्तपरमचिदैकात्म्यस्य 'विकस्वरं' पराहन्ताविमर्शात्मकं 'निर्विकल्पकं' कृत्रिमाहंकारादिविकल्पविलक्षणं ज्ञानं पौरुषं भवति इति वाक्यार्थः। 'औचित्येन' इति तद्वत्पूर्णेनात्मना इत्यर्थः। अतश्च 'सर्वो ममायं विभवः' इत्येवंरूपत्वमस्याः। 'यस्य' इति बौद्धज्ञानस्य। 'प्राग्वत्' इति यथैवाज्ञानयोः परस्परं पोष्यपोषकभावस्तथैव इत्यर्थः; तथैव पूर्णापूर्णत्वेन पुनः विशेषो ग्राह्यः, अन्यथा हि ज्ञानाज्ञनयोः स्वरूपमेवाभिहितं न स्यात् ॥४१॥४२॥

नन्वेवंविधमज्ञानं तावदनाद्येवावस्थितम् इति नास्ति विवादः, एतदभावात्मकं ज्ञानं पुनः कदा समुदियात्, एतदभावे च किं निमित्तम् ? इत्याशङ्क्याह—

तत्र दीक्षादिना पौंस्नमज्ञानं ध्वंसि यद्यपि ।
तथापि तच्छरीरान्ते तज्ज्ञानं व्यज्यते स्फुटम् ॥४३॥

यद्यप्युक्तस्वरूपं 'पौस्नमज्ञानं'—

'दीयते ज्ञानसद्भावः क्षीयन्ते पशुवासनाः ।
दानक्षपणसंयुक्ता दीक्षा तेनेह कीर्तिता ॥'

इत्याद्युक्तस्वरूपया दीक्षया नश्यत्येव 'तथापि' 'तत्' अज्ञानाभावमात्ररूपमात्मज्ञानं व्यक्त्युन्मुखमपि—

'..................प्रारब्धेकं न शोधयेत् ।'

इत्याद्युक्तेरिदंशरीरारम्भकस्य कार्ममलस्य सद्भावात् 'तस्य' वर्तमानशरीरस्य 'अन्ते स्फुटं व्यज्यते'

'.......... ......देहपाते शिवं व्रजेत् ।'

इत्याद्युक्त्या साक्षात्कारात्म स्फुरति इत्यर्थः । आदि-शब्दाच्च शेषवृत्त्या ग्रहणं, न तु तीव्रतरशक्तिपातादेः तद्धि दीक्षायां निमित्तम् इति तद्वचनेनैवास्य ग्रहः सिद्धः, न चास्मिन्दीक्षातोऽन्यत्किंचिन्मुक्तौ निमित्तम् । तदुक्तं

'तस्मात्प्रवितताद्बन्धात्परस्थानविरोधकात् ।
दीक्षैव मोचयत्यूर्ध्वं शैवं धाम नयत्यपि ॥'

इति । तीव्रतमशक्तिपातादौ पुनरनुपायादिक्रमेण दीक्षा भवेत्, येनास्य तत्कालमेवापवर्गः । तदुक्तं—

'तत्संबन्धात्ततः कश्चित्तत्क्षणादपवृज्यते ।'

इति दीक्षानिरपेक्षमेव पुनरेतन्न मुक्तौ निमित्तम् इति न संभाव्यम्, एवं श्रुतिविरोधः स्यात् ।

'तस्य दीक्षां विनैवात्मसंस्कारपरिणामतः ।
सम्यग्ज्ञानं भवेत्सर्वशास्त्रेषु परिनिष्ठितम् ॥'

इत्यादौ पुनर्बाह्यक्रियादीक्षाभिप्रायेण तन्निषेधो विवक्षितः, अन्यथा ह्यत्रात्मसंस्कारशब्दार्थं एव कथं संगच्छताम् इत्यलं बहुना ॥४३॥

ननु यद्येवं दीक्षया देहान्त एव मुक्तिर्भवेत्, तत्कथं 'जीवन्नेव विमुक्तोऽसौ' इत्याद्युक्तम् इत्याशङ्क्याह—

बौद्धज्ञानेन तु यदा
पौरुषमज्ञानजृम्भितम् ।
विलीयते तदा जीवन्-
मुक्तिः करतले स्थिता ॥ ४४ ॥

'बौद्धज्ञानेन' इति परमेश्वराद्वयशास्त्रश्रवणाद्युद्भूतेन । तदुक्तं—

'गुरुणैव यदा काले संप्रदायो निरूपितः ।
तदाप्रभृति मुक्तोऽसौ यन्त्रं तिष्ठति केवलम् ॥'

इति । एतच्च दीक्षिताधिकारेणैव ज्ञेयम्, नहि अकृतदीक्षस्य शास्त्रश्रवणेऽप्यधिकारः इति कुतस्तदवबोधनिमित्तकोऽपि तज्ज्ञानाविर्भावः स्यात् । तदुक्तं—

'अदीक्षितानां पुरतो नोच्चरेच्छिवपद्धतिम् ।'

इति । न च अप्रध्वस्तपौरुषाज्ञानस्य अनेन किंचिद्भवति इत्युक्तप्रायम्, अन्यथा हि प्रेक्षावतां दीक्षायां प्रवृत्तिरेव न स्यात्—साध्यस्यार्थस्य अत एव स्फुटरभावात्, अत एव दीक्षायां शिथिलास्थत्वं न वाच्यं, तस्या एव मुक्तिं प्रति मूलकारणत्वात् । एवं दीक्षादिना पौंस्नं ज्ञानमभिव्यक्त्यु-न्मुखमपि न तदैव मुक्तिप्रदं—देहान्ते तदभिव्यक्ते रुक्तत्वात्, इदं पुनस्तदैव इति ततोऽस्य प्राधान्यमपि कटाक्षितम् ॥४४॥

न केवलमेतदेवास्य ततः प्राधान्यनिमित्तं यावदन्यदपि इत्याह—

दीक्षापि बौद्धविज्ञान-
पूर्वा सत्यं विमोचिका ।
तेन तत्रापि बौद्धस्य
ज्ञानस्यास्ति प्रधानता ॥ ४५ ॥

इह

'सर्वलक्षणहीनोऽपि ज्ञानवान्गुरुरुत्तमः ।'

इत्याद्युक्तेरधिगतशास्त्रार्थस्यैव हि गुरोर्दीक्षायाम् अधिकारः, अत एव तस्य

'शिवशास्त्रविधानज्ञं ज्ञानज्ञेयविशारदम् ।'

इति लक्षणं प्राधान्येनोक्तं, अन्यथा पुनः

'शास्त्रहीने न सिद्धिः स्याद्दीक्षायां वीरवन्दिते ।'

इत्याद्युक्त्या दीक्षा विमोचिकैव न स्यात्, तेन इति दीक्षायां बौद्धस्य ज्ञानस्य कारणत्वात्, नहि तेन विना तस्या निष्पत्तिरेव स्यात् ॥ ४५ ॥

न चैतदस्मदुपज्ञमेव इत्याह—

ज्ञानाज्ञानगतं चैतद्-
द्वित्वं स्वायम्भुवे रुरौ ।

मतङ्गादौ कृतं श्रीमत्-
खेटपालादिदैशिकैः ॥ ४६ ॥

तदुक्तं श्रीस्वायम्भुवे—

'अथात्ममलमायाख्यकर्मबन्धविमुक्तये ।
व्यक्तये च शिवत्वस्य शिवज्ञानं प्रवर्तते ॥'

इति ।

'अथानादिर्मलः पुंसां पशुत्वं परिकीर्तितम् ।
तत्सद्भाववशोऽज्ञादिः पाशौघः पौरुषः स्मृतः ॥
तस्मात्तत्त्वतो ज्ञेयं मोक्षमक्षयमिच्छता ।'

इति च । श्रीरुरावपि—

'यजन्ति विविधैर्यज्ञैर्मन्त्रतत्त्वविशारदाः ।
गुरुतन्त्राद्यनुज्ञातदीक्षासिच्छिन्नसंशयाः ।'

इति ।

'न मीमांस्या विचार्या वा मन्त्राः स्वल्पधिया नरैः ।
प्रमाणमागमं कृत्वा श्रद्धातव्या विचक्षणैः ॥
सर्वे मन्त्रात्मका देवाः सर्वे मन्त्राः शिवात्मकाः ।
शिवात्मकमिदं ज्ञात्वा शिवमेवानुचिन्तयेत् ॥'

इति च । श्रीमतङ्गेऽपि—

'ततः भगवानीशः स्फुरन्माणिक्यशेखरः ।
वाक्यानलसमुत्थेन ज्वालावीर्येण मन्त्रराट् ॥
प्रददाह मुनेः सर्वमज्ञानं तृणराशिवत् ।'

इति ।

'शिववक्त्राम्बुजोद्भूतममलं सर्वतोमुखम् ॥
शिवत्वोन्मीलनं तथ्यं ज्ञानमज्ञाननाशनम् ।
अनेन सिद्धाः पश्यन्ति यत्तत्पदमनामयम् ॥'

इति च । आदिशब्देन चिल्लाचक्रेश्वरीमतादेर्ग्रहणम् । तदुक्तं तत्र—

'बौद्धं च पौरुषेयं च द्विविधं तन्मलं स्मृतम् ।
तत्र दीक्षादिना याति पौरुषेयं मलं क्षयम् ॥
बौद्धमक्षयमेवास्ते तावत्तावत्समुद्रितम् ।
यावन्न बौद्धमेवास्य सजातीयविलापकम् ॥
ज्ञानमभ्युदितं सम्यक्सारेतरविभागकृत् ।'

इति । पौंस्नज्ञानाभिव्यञ्जने दीक्षा तावन्न प्रभवेद्यावदस्य बौद्धं ज्ञानं पूर्वभावि न स्यात्, येनास्य ततोऽपि प्राधान्यमुक्तम् ॥ ४६ ॥

एवं बौद्धमपि ज्ञानं पारमेश्वरं शास्त्रमन्तरेण कुतः समुदियात् इति तदेव मूलकारणत्वादिह प्रधानम् इत्याह—

तथाविधावसायात्म-
बौद्धविज्ञानसम्पदे ।
शास्त्रमेव प्रधानं य-
ज्ज्ञेयतत्वप्रदर्शकम् ॥ ४७ ॥

'संपदे' इति तां जनयितुम् इत्यर्थः । यतः 'ज्ञेयस्य' नीलसुखादेः 'तत्त्वं' प्रकाशमानत्वान्यथानुपपत्त्या प्रकाशात्मकशिवस्वभावत्वं, तस्य प्रदर्शकम् परार्द्धयोपदेशकारित्वात्तदभिधायकम् इत्यर्थः । अत एव चास्य तदप्रदर्शकतया शास्त्रान्तरेभ्यो वैलक्षण्यमपि कटाक्षितम् ॥ ४७ ॥

ननु भवत्वेवम्, अत्र पुनः किं निमित्तं यत्पौंस्नाज्ञाननिवृत्तौ तु तदेव इत्याशङ्क्याह—

दीक्षया गलितेऽप्यन्त-
रज्ञाने पौरुषात्मनि ।
धीगतस्यानिवृत्तत्वा-
द्विकल्पोऽपि हि संभवेत् ॥४८॥

'धीगतस्य' इति अज्ञानस्य । विकल्पो हि' भेदप्रथात्मकः स चैव अख्यातिरूपत्वादज्ञानम् इति बहूक्तम् ॥४८ ॥

ननु धीगतमज्ञानं यदि न निवृत्तं तदात्मनः किमायातम् इत्याशङ्क्याह—

देहसद्भावपर्यन्त-
मात्मभावो यतो धियि ।
देहान्तेऽपि न मोक्षः स्या-
त्पौरुषाज्ञानहानितः ॥४९॥

दीक्षितस्यापि हि नियतकालं बुद्धावात्मग्रहो भवेत् इति तयोरभेदाद् बौद्धमप्यज्ञानमात्मन्युपचितं संभवेत् इति भावः ।

अत एव देहान्ते बुद्धावात्मग्रहव्युपरमात् पौरुषस्याज्ञानस्य दीक्षादिना पूर्वमेव प्रध्वस्तत्वान्मोक्षः इति युक्तमुक्तं 'तच्छरीरान्ते तज्ज्ञानं व्यज्यते स्फुटम्' इति ॥ ४९ ॥

एवं विकल्पोऽत्र संभवन्मुक्तौ व्यवधायकः इति न तदैव मुक्तिः, तस्य पुनरसंभवे सत्यपि देहे मुक्तिः इत्याह—

बौद्धाज्ञाननिवृत्तौ तु
विकल्पोन्मूलनाद्ध्रुवम् ।
तदैव मोक्ष इत्युक्तं
धात्रा श्रीमन्निशाटने ॥ ५० ॥

न चैतदप्रमाणकम् इत्याह 'इत्युक्तम्' इत्यादि ॥ ५० ॥

विकल्पयुक्तचित्तस्तु
पिण्डपाताच्छिवं व्रजेत् ।
इतरस्तु तदैवेति
शास्त्रस्यात्र प्रधानतः ॥ ५१ ॥

'इतर' इति निर्विकल्पः । 'तदैव' इति देहसद्भावे इत्यर्थः । यदुक्तं तत्रैव—

'विकल्पयुक्तचित्तस्तु पिण्डपाताच्छिवं व्रजेत् ।'
विकल्पहीनचित्तस्तु ह्यात्मानं शिवमव्ययम् ॥
पश्यते भावशुद्ध्या यो जीवन्मुक्तो न संशयः ।

इति । इदानीं प्राक्प्रतिज्ञातं शास्त्रस्यैव प्राधान्यं निगमयति— इति इत्यादिना, 'इतिशब्दः' कात्स्न्येन योज्यः तेन श्रीनिशाटनग्रन्थसमाप्तौ हेतौ च व्याख्येयः । स च 'ज्ञेयतत्त्वप्रदर्शकम्' इत्यादिना प्रागप्युक्तः ॥ ५१ ॥

ननु किं नाम ज्ञेयस्य तत्त्वं यत्प्रदर्शनेनास्य शास्त्रप्राधान्यावगमकमपि स्यात् इत्याशङ्क्याह—

ज्ञेयस्य हि परं तत्त्वं
यः प्रकाशात्मकः शिवः ।
नह्यप्रकाशरूपस्य
प्राकाश्यं वस्तुतापि वा ॥ ५२ ॥

'ज्ञेयस्य' नीलादेर्नीलतैव प्रकाशमानता न तावदात्मभूता, तथात्वे हि सर्वदैव सर्वान्प्रति च स्यान्न तु कदाचित्कंचित्प्रति इति सर्वेऽपि सर्वज्ञाः स्युः । अतश्च अस्य प्रकाशते, मम प्रकाशते इति प्रकाशात्मप्रमातृसंलग्नैव सा युज्यते इति नासौ स्वातन्त्र्येण पर्यवसितस्वरूपो नीलादिः, शिव एव प्रकाशात्मकः प्रमाता, तदतिरिक्तस्य अन्यस्य भेदाभेदविकल्पोपहतत्वात्, अतश्च नीलादेर्ज्ञेयस्य प्रकाशमानत्वात् स एव परमार्थः इत्युक्तं 'प्रकाशात्मकः शिवः परं तत्त्वम्' इति । नन्वसौ स्वयमतथारूपोऽपि प्रकाशसंबन्धेनापि हि प्रकाशमानो नीलादिः स्वयं प्रकाशस्वरूप एव सन् प्रकाशते, नहि अप्रकाशरूपश्च प्रकाशते च इति स्यात्, नहि अश्वेतः प्रासादः श्वेतते, न चैवं वस्तुत्वमप्यस्य स्यात् नहि प्रकाशरूपतामपहाय अन्यद्वस्तु संभवेत् इति भावः ॥ ५२ ॥

एवं च न केवलं नीलादेर्ज्ञेयस्य भावस्य प्रकाशमानत्वात्प्रकाशात्मकः शिवस्तत्त्वं यावत्तदभावस्यापि इत्याह—

अवस्तुतापि भावानां
चमत्कारैकगोचरा
यत्कुड्यसदृशी नेयं
धीरवस्त्वेतदित्यपि ॥ ५३ ।

यतो 'नास्त्यत्र घट' इत्येवंरूपापि बुद्धिर्बोधस्वभावत्वात्कुड्यादिजडपदार्थविलक्षणा अत एव घटाद्यभावोऽपि बुद्ध्यमानत्वात्परमानन्दैकघनबोधात्मकशिवस्वभाव एव इत्यर्थः । तदाहुः—

'अबोधोऽपि बुद्ध्यमानो बोधात्मभूत ईश्वर एव ।'

इति ॥ ५३ ॥

[ क्रमशः

# पाणिनीयव्याकरणस्य वैशिष्ट्यानि

श्रीमान् पं. बाँकेलालमिश्रः

अनादिनिधनंब्रह्म शब्दतत्त्वं यदक्षरम्।
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः[1]।
वाग्रूपता चेदुत्क्रामेदववोधस्य शाश्वती।
न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥[2]
एकत्वमनतिक्रान्ता वाङ्नेत्रा वाङ्निवन्धनाः।
पृथक् प्रत्यवभासन्ते वाग्विभागाद् गवादयः[3]॥

भगवता विश्वनाथेन आत्मशक्त्या विविधा सृष्टिर्विरचिता, परन्तु तत्र तत्र सन्तोषमलभमानेन यदा मानवसृष्टिर्विहिता, तदैव सृष्टेः कार्तार्थ्यं मेने। यतो हि मानवशरीरं ब्रह्मावलोकधिषणमजायत। उक्तञ्च श्रीमद्भागवते एकादशस्कन्धे—

सृष्ट्वा पुराणि विविधान्यज आत्मशक्त्या,
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान्।
तैस्तैरतुष्टहृदयः पुरुषं विधाय,
ब्रह्मावलोकधिषणं मुदमाप देवः[4]॥

तत्र च ब्रह्मज्ञानरूपलक्ष्यसिद्ध्यर्थमेव मानवशरीरस्य रक्षामावश्यकीं मत्वा पृथ्वीं, जलम्, अग्निः, वायुः, आकाशम् इति पञ्चभूतानां सृष्टिः पूर्वमेव कृता, तथैव मानवेभ्यः शब्दतत्त्वमपि उपदिष्टम्। शब्द ज्ञानं विना मानवः सामाजिको भवितुं नार्हति। तदभावे ब्रह्मचर्यादयः आश्रमाः पालयितुमशक्याः। तत्तदाश्रयविहितानामाचाराणामनुष्ठानेनैव पूर्वसङ्केतित ब्रह्मज्ञानस्य प्राप्तिर्भवति। तच्च शब्दतत्वं द्वेधा व्यवस्थितम्—वैदिकं लौकिकञ्चेति। तत्र वैदिकशब्देषु व्याकरणानुशासनं लक्ष्मानुकार्येव भवति, किन्तु लौकिकशब्देषु लक्ष्यशासकं भवति। तच्च शब्दरूपं लक्ष्यं व्याकरणनियमज्ञानेनैव सम्यगवबोद्धुं शक्यते नान्यथा, इति अनादिकालादेवास्ति व्याकरणस्यावश्यकता। तत्र अनेकेषु व्याकरणशास्त्रेषु मध्येकालमस्तङ्गतेषु द्वापरयुगावसाने महामुनिना पाणिनिना विरचितमेकमष्टाध्यायीरूपं महामहनीयं व्याकरणम्। तद्विषये कानिचिद्वैशिष्ट्यानि प्रकाशयितुं प्रयत्यते।

पाणिनीयव्याकरणस्य परिचयः वैशिटचपदार्थश्च—

तत्र गार्ग्य,[1] शाकल्य[2], शाकटायन[3], सेनक[4] प्रभृतिभिर्मुनिभिर्विरचितेषु संस्कृतभाषानियामकेषु व्याकरणेषु कालक्रमेण विलुप्तेषु सत्सु महामुनिः पाणिनिः व्याकरणविशेषं व्यरीरचत्। अस्मिन् व्याकरणेऽनुवृत्तिक्रमादौ प्रकृष्टा वैज्ञानिकी सरणिः समाश्रिताऽस्ति, या चाऽग्रे स्फुटीभविष्यति। पाणिनिनामा कश्चन महामुनिः दाक्षी नामिकायाः मातुर्गर्भादुदपद्यत। एतदीयजन्मकालविषये इदमित्थं निर्णयः कर्त्तुं न शक्यते। तथापि द्वापरयुगावसाने कलियुगस्यारम्भकाले एष मुनिः भारतभूभागमलञ्चकारेति कथञ्चिद् वक्तुं शक्यते। यतो हि अनेन अष्टाध्याय्यां वासुदेवार्जुनाभ्यां वुन्[5] इति सूत्रे भगवान् वासुदेवः अर्जुनश्च स्मृतिविषयतां प्रापितौ। अनेन ज्ञायते महाभारतयुद्धान्तरमदसीयः कालः। पुनश्च राजर्षिपरीक्षित–कालात्पूर्वमस्यकालः। यतो हि परीक्षितो नामसङ्केतः क्वापि न कृतः। अथ च परीक्षित-

---

१-वाक्यः ब्र० कारिका १

२-तत्रैव कारिका १२४

३-तत्रैव पं० रघुनाथशर्मणा उद्धृता, पृ० १५०

४-श्रीमद्भागवते ११–६–२८।

१–अङ्गार्ग्यगालवयोः ( अष्टा० ७–३–९९ )

२–लोपः शाकल्यस्य ( अष्टा० ८–३–१९ )

३-त्रिप्रभृतिषु शाकटायनस्य ( अष्टा० ८–४–५० )

४–गिरेश्च सेनकस्य ( अष्टा० ५–४–११२ )

५–अष्टा० ( ४–३–९८ )

मुद्दिश्य श्रीमद्भागवतसप्ताहप्रवचनं विधातुः महामुनेः शुकदेवस्य च चर्चा न क्वापि कृता। अपि तु व्यासवरुण-निषादचण्डालबिम्बानां चेति वक्तव्यम्[1] इति वार्तिकं रचयता श्री कात्यायनेन वैयासकिनाम्ना श्री शुकदेवस्य सङ्केतः सम्पादितः। तत्र च कोऽयं भारतभूभागः महामुनेः एतस्य जन्मना समलङ्कृत इति विचारे-शालातुर' नामको ग्रामविशेषः यश्चेदानीं यवनजातीयाक्रान्ते भूभागे वर्तमान-लाहुर' नाम्ना प्रसिद्धिं गतोऽस्ति, वर्तमानकाले-रावलपिण्डी' जनपदः यश्च पुनः-तक्षशिला' इति नाम्ना प्रसिद्ध आसीत्। तत्समीप एव वर्तमान भारतात् पश्चिमोत्तरदिशि विराजमानोऽस्ति। लक्षश्लोकात्मकसङ्ग्रहग्रन्थस्य रचयिता आचार्यः व्याडिः एतस्य मातुल आसीदित्यपि प्रचुरा प्रसिद्धिरस्ति। एतस्य समये संस्कृतभाषा शैथिल्यं प्रप्नुवती आसीत्। तन्नियामकानि प्राक्तन् व्याकरणानि चापि विलुप्तप्रायाण्यासन्। इत्थं विचार्य परमकारुणिकः एष महामुनिः पाणिनिः इदमद्भुतं व्याकरणं रचयामास। अनेन अद्य यावत् संस्कृतभाषा जीवन्ती विराजते। यदि दुग्धपूर्णः कोऽपि घटः वस्त्राच्छन्नमुखः अगाधे गङ्गाजले प्रक्षिप्येत पुनश्च केनापि निमज्जनकर्त्रा स घटो बहिरानीयेत तदा रक्तिकामात्रमपि दुग्धं बहिर्न निर्गच्छति, अपितु सम्पूर्णं प्राप्यते, तत्र को हेतुः? इति मुखद्वारे वस्त्रबन्धनमेव। अन्यथा बन्धनरहितघटात् दुग्धं बहिर्निःसृत्य धारया सम्मिलय अगाधं गङ्गाजलं गमिष्यति। तस्यामवस्थायां नीरक्षीरविवेचकः कोऽपि हंस एव पृथक् कर्तुं शक्नुयात्। तथैव भाषामुखमपि यदि व्याकरणनियमबन्धनेन परिवेष्टितं स्यात्तदा तस्याः भाषायाः सुचिरं जीवनं सम्भाव्येत। अन्यथा व्याकरणनियमरहितभाषा विनष्टा भवतीत्येवेति कृत्वा एतत्पाणिनीयं व्याकरणं संस्कृतभाषायाः कृते महते उपकाराय कल्पते। अदसीया विशेषता अवश्यं वचनीयास्ति, सैव वैशिष्ट्यपदार्थः। तज्ज्ञानेन एव एतद्व्याकरणाध्ययने लोकानां प्रवृत्तिर्भविष्यति। यतश्च तज्ज्ञानं प्रयोजनज्ञानाधायकम्। प्रयोजनज्ञानमेव प्रवृत्तिजनकम्। उक्तञ्च प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति।

एवञ्च प्रसङ्गतः व्याक्रियन्ते व्युत्पाद्यन्तेऽसाधुशब्देभ्यः साधुशब्दाः पृथक् क्रियन्ते येन तद्व्याकरणमिति व्युत्पत्त्या असाधुशब्दावधिकसाधुशब्दविषयकपृथक्कृतिज्ञापकः नियमविशेषो व्याकरणमिति लभ्यते। निष्कृष्टदृष्ट्या शब्दगतसाधुत्वज्ञापकनियम--विशेषत्वं व्याकरणशास्त्रलक्षणमिति चावगन्तव्यम्।

## पाणिनीयव्याकरणे सूत्रभेदविमर्शः--

अस्मिंश्च व्याकरणे नियमविशेषाः सूत्रात्मकतया सङ्केतिताः सन्ति। सूत्रलक्षणञ्च--

अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥

इत्युक्तमस्ति। एतादृशलक्षणलक्षितानां सूत्राणां षड्विधाः दृश्यन्ते एतस्मिन् व्याकरणे। तथाहि--

संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रमुच्यते॥

तत्र शक्तिग्राहकत्वं संज्ञा सूत्रत्वम्। यथा--वृद्धिरादैच्'[2] 'अदेङ् गुणः'[3] इत्यादि संज्ञासूत्रम्। संज्ञासूत्राधिकारसूत्रभिन्नत्वे सति अप्रामाण्यज्ञानानास्कन्दितलक्ष्यधार्मिकसाधुत्वप्रकारक-शास्त्रजन्याप्रामाण्यज्ञानानास्कन्दित-......

१-सुधातुकरङ् च (अष्टा० ४-१-९७) सूत्रे पठितम्।
२-अष्टा० (१-१-१)
३-तत्रैव (१-१-२)

बोधे सहकारित्वेन मुन्यभिप्रेतत्वं परिभाषा सूत्रत्वम् । तच्च-इको गुणवृद्धी'[1] तस्मिन्निति निर्दिष्टे पूर्वस्य'[2] इत्यादौ सुष्ठु वर्तते ।

लक्ष्यविषयकापूर्वसंस्कारविषयक-बोधजनकत्वं विधिसूत्रत्वम् । यथा-इको यणचि'[3] अकः सवर्णे दीर्घः'[4] इति विधिसूत्रम् ।

सिद्धौ सत्यामारभ्यमाण-विधित्वं नियमसूत्रत्वम् । यथा—धातोस्तन्निमित्तस्यैव'[5], इत्यत्र-वान्तो यि प्रत्यये'[6] इत्यनेनैव वान्तादेशस्य सिद्धत्वात् तत्र लक्षणसमन्वयः सुतरां जातः ।

वत्प्रत्ययघटितत्त्वमतिदेशसूत्रत्वम् । यथा-अन्तादिवच्च[7]-पूर्ववत्सनः'[8] इत्यादि । क्वचिद् वतिं विनापि वत्यर्थो गम्यते तदा तत्रापि अतिदेशत्वं मन्तव्यमेव । यथा-बहुगुणवतुडति संख्या[9]' इति सूत्रे महाभाष्यकारः पतञ्जलिः कथयति—असंख्यां यद्यं संख्यामित्याह ततो गम्यते संख्यावदिति । यथा अब्रह्मदत्तं ब्रह्मदत्तमित्याह ब्रह्मदत्तवदिति गम्यते । अस्यातिदेशसूत्रस्य षड्भेदाः शब्दशास्त्रे निरूपिताः तन्नात्र प्रपञ्चयते । एतदर्थं प्रौढमनोरमायां तृज्वत् क्रोष्टुः'[10]' इति सूत्रं द्रष्टव्यम् ।

स्वप्रदेशे लक्ष्यसंस्कारविषयक-बोधाजनकत्वे सति उत्तरसूत्रानुवृत्त्यालक्ष्यसंस्कारविषयक--बोधजनकत्वमधिकारसूत्रत्वम् । यथा:-अङ्गस्य[11]' भस्य[12]' प्रत्ययः[13] परश्च[14]' पूर्वत्रासिद्धम्[15]' इत्यादि । अस्य चत्वारो भेदाः शब्दशास्त्रे निरूपिताः दृश्यन्ते । यथोक्तम्--

गोयूथः सिंहदृष्टिश्च मण्डूकप्लुतरेव च ।
गङ्गाप्रवाहवच्चापि अधिकारश्चतुर्विधः ।। इति ।।

सूत्रानुवृत्तिवैज्ञानिकता-विमर्शः—

अष्टाध्यायीसूत्राणामर्थाः क्वचित्स्वतः क्वचिच्चाऽनुवृत्तिद्वारा सारल्येन ज्ञातुं शक्यन्ते । यथा प्रथमाध्याये प्रथमपादे प्रथमसूत्रमस्ति-वृद्धिरादैजिति । तत्र स्वत एव तदर्थो ज्ञायते । तथाहि—वृद्धिरिति विधेयपदम्, आदैजिति चोद्देश्यपदम् । एवञ्च आदैक्पदार्थः वृद्धिसंज्ञको भवतु इति सूत्रार्थीया प्रथमकक्षा । ततश्च आत्' इत्यनेन दीर्घाकारः, ऐजितिप्रत्याहारपदेन ऐकारौकारौ च गृह्यन्ते । एवञ्च आकारः ऐकारः औकारश्च वृद्धि संज्ञको भवतु इति द्वितीयाकक्षा । तदनुप्लुताकारस्य प्लुतैकारौकारयोश्च वृद्धिसंज्ञावारणाय तपरस्तत्कालस्य[16]' इति सूत्रसाहाय्यं गृहीत्वा द्विमात्रिकस्याकारस्यौकारस्य च वृद्धि-संज्ञा भवतु इति तृतीयकक्षायां सारल्येन पर्यवसितोऽर्थः समक्षमागतः । तत्र ऐच् प्रत्याहारस्यार्थः आदिरन्त्येन सहेता[17]' इति सूत्रस्य

---

१-तत्रैव ( १-१-३ )
२- " ( १-१-६६ )
३- " ( ६-१-७७ )
४- " ( ६-१-१०१ )
५-अष्टा० ६-१-८० )
६-तत्रैव ( ६-१-७९ )
७-तत्रैव ( ६-१-८१ )
८- " ( १-३-६२ )
९-महाभाष्ये, अष्टा० ( १-१-२३ )
१०-प्रौ० म० अजन्तपुंल्लिङ्गे ( अष्टा० ७-१-६५ )
११-अष्टा० ( ६-४-१ )
१२-तत्रैव ( ६-४-१२९ )
१३-तत्रैव ( ३-१-१ )
१४- " ( ३-१-२ )
१५-" ( ८-२-१ )
१६-अष्टा० ( १-१-७० )
१७-तत्रैव ( १-१-७१ )

सहकारं गृहीत्वा, तत्र च–अणुदित्सवर्णस्य चाप्रत्ययः[1] इत्यनेन ऐजंशे–गुणाः अभेदकाः' इत्यनेन आकारांशे प्राप्तस्य सवर्ण ग्रहणस्य वारणाय तपरसूत्र-साहाय्यं गृह्यते इति कृत्वा अष्टाध्यायीसूत्रस्यार्थः अष्टाध्यायीसूत्रद्वय-साहाय्येनैव सुज्ञाता। अग्रिमे च अदेङ् गुणः[2] इति द्वितीय-सूत्रस्याप्यर्थ एवमेव सुष्ठु ज्ञातुं शक्यते। स च इत्थम्–ह्रस्वाकारः द्विमात्रिकः एकारः ओकारश्च गुण संज्ञकः स्यात् इत्याकारः सम्पद्यते। अग्रिमे च–इको गुणवृद्धी[3] इति परिभाषासूत्रस्यार्थोऽपि स्वत एव अनुवृत्तिमन्तरैव ज्ञातुं शक्यते। तथाहि वृद्धिगुणपदयोः पूर्वसूत्राभ्यामनुवृत्त्यैव लाभसम्भवे पुनरत्र गुणवृद्धिशब्दयोः सामर्थ्यात् गुणवृद्धि-शब्दाभ्यां यत्र गुणवृद्ध्योर्विधानं तत्र इकः इति षष्ठ्यन्तं पदमुपतिष्ठते, इत्यर्थः आञ्जस्येन सम्पद्यते। अग्रिमे च 'नधातुलोप आर्धधातुके[4]' इति चतुर्थसूत्रे इको गुणवृद्धी' इति सम्पूर्णं सूत्रमनुवर्त्य धात्वंशलोपनिमित्ते आर्धधातुके परे इकः स्थाने गुणवृद्धी न भवेतामिति सूत्रार्थः सरलतया बोद्धुं शक्यते। 'क्ङिति च[5]' इति पञ्चमे सूत्रेऽपि नधातु-लोप' इत्यतो नेति पदम्, इको गुणवृद्धि[6]' इत्यतः समग्रं पदद्वयञ्चानुवर्त्य गितिकितिङिति च परे इकः स्थाने गुणवृद्धी न भवेतामिति सूत्रार्थः सुष्ठु अवगन्तुं शक्यते। एवमेव–दीधीवेवीटाम्'[7] इति सूत्रस्याप्यर्थबोधने प्रक्रिया गृहीता वर्तते। एषा एव वैज्ञानिकी पद्धतिः। अतएव शिष्टोक्तिरपि वर्तते––सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्तनीयं सर्वत्र इति।

कतिपयसूत्राणां विशेषवैलक्षण्यम्—

अष्टाध्यायीसूत्रेषु कानिचित् सूत्राणि विशेषतो महत्त्वाधायकानि सन्ति। यथा–विप्रतिषेधे परकार्यम्[8] इति प्रथमाध्यायस्थं सूत्रं सापादिकसूत्रेषु परशास्त्रस्य बलवत्त्वं बोधयति। यथा—सुपि च[9]' इति सूत्रं रामाभ्याम्' इत्यत्र दीर्घं विधातुं चरितार्थम्। बहुवचने झल्येत्[10] इति च सूत्रं 'रामेषु' इत्यत्र एत्वं विधातुं कृतार्थमस्ति। रामेभ्यः' इत्यत्र तु द्वयोरनयोः प्राप्तौ सत्यां विप्रतिषेधे परं कार्यम्'[11] इति सूत्रं परस्य एत्वविधायकशास्त्रस्य बलवत्त्वं बोधयति। तेन दीर्घं बाधित्वा एत्वमेव भवति, अन्यथा पर्यायेण द्वयो-रपि विधानमापद्येत। इदञ्च सूत्रं त्रिपाद्यां न प्रवर्तते, परस्यासिद्धत्वेनाभावात्। उक्तञ्च वार्तिककृता—पूर्वत्रा-सिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति[12]। एवमेव पूर्व-त्रासिद्धमिति अष्टमाध्याये द्वितीयपादे प्रथमं सूत्रम्। तेन सापादिकशास्त्रं प्रति त्रैपादिकशास्त्रस्यासिद्धत्वं बोध्यते। त्रिपाद्यामपि पूर्वशास्त्रं प्रति परशास्त्रस्य च। यथा–मनोरथः 'इत्यत्र मन र्‌रथः इत्यवस्थायां रो रि[13]' इत्यनेन रेफस्य लोपे प्राप्ते,–हशि च'[14] इत्यनेन उत्वे च प्राप्ते तत्र-हशि च' इति सापादिकशास्त्रदृष्ट्या रो रि' इति त्रैपा-दिकशास्त्रस्यासिद्धत्वात् उत्वमेव भवति। त्रिपाद्यामपि

१–तत्रैव (१–१–६९)
२– " (१–१–२)
३– " (१–१–३)
४–अष्टा० (१–१–४)
५–तत्रैव (१–१–५)
६–तत्रैव (१–१–३)
७– " (१–१–६)
८– " (१–४–२)
९– " (७–३–१०३)
१०–अष्टा० (७–३–१०३)
११– " (१–४–२)
१२–सिद्धान्तकौमुद्यां, विप्रतिषेधे परं कार्यम्। अष्टा० १–४–२) सूत्रे तत्त्वबोधिन्यां द्रष्टव्यम्।
१३–अष्टा० (८–३–१४)
१४–तत्रैव (६–१–११४)

इदृशी एव गतिः, तेन-प्रशान्' इत्यत्र न लोपशास्त्रदृष्टया-मोनो धातोः[१]' इति परशास्त्रस्यासिद्धत्वात् न लोपो न जायते। अथ च —प्रत्ययः[२]' परश्च[३]' आद्युदात्तश्च[४]' इत्येतत् सूत्रत्रयं तृतीयाध्यायतः आरभ्य पञ्चमाध्यायं यावत् अधिकृतमस्ति। एवञ्च तृतीये चतुर्थे, पञ्चमे चाध्याये इदं सूत्रत्रयं निष्प्रत्यूहमनुवर्तते। अनयैव रीत्या-अङ्गस्य[५]'–भस्य[६] इत्यादि सूत्रमपि अधिकारसूत्रतया गृह्यते। असिद्धवदत्राभात्[७]' इत्यपि च शास्त्रं समानाश्रये कर्तव्ये कृतस्याभीयस्यासिद्धत्वं विदधाति। तेन बभूव' दिदीये' इत्यादौ उवङि यणि च कर्तव्ये वुग्युटोः असिद्धत्वं प्राप्तम्, तच्च न भवति, वुग्युटावुवङ्यणोःसिद्धौ वक्तव्यौ'[८] इति वचनादित्यन्यत्। एवमेव अन्यत्रापि विशेषतो वैलक्षण्यमालोचयितुं शक्यते।

पाणिनीयव्याकरणस्य दर्शनत्वम्—

यद्यपि पाणिनीयं व्याकरणं शब्दानां साधनाय प्रक्रियाविशेषं प्राधान्येन बोधयति, तथापि एतस्य दर्शनत्वमपि अविच्छिन्नपरम्परया अवगतं वर्तत एव। तथाहि–भारतीयदर्शनस्यायमेव विशेषोऽवगम्यते यत् आत्मानात्मविवेचनद्वारा मोक्षतत्त्वं प्रकाशयतु। तदनुगुणमेतद्व्याकरणमपि आत्मानात्म विवेचने पदं पश्चान्न-करोति। तथाहि चत्वारि वाक्परिमिता पदानि इति ऋङ्मन्त्रमादाय चतसृणां वाचां स्वरूपं ज्ञायते। तत्र वैखर्याः मध्यमायाः पश्यन्त्याश्च संस्कारकं व्याकरणशास्त्रं प्रसिद्धमस्ति। तुरीयायाः पराख्यवाचः संस्कारो न भवति, तस्याः नित्यत्वात्, निरवयवत्वात्, चेतनत्वाच्च। उक्तञ्च महाभारते––स्वरूपज्योतिरेवान्तः परा वागनपायिनी' इति। एवञ्च परावाचः एव विवर्तभूतं पश्यन्त्यादिकं सर्वं वाक्तत्वम्। तत्र नित्यः अखण्डः स्फोटः परावागेव। मध्यमा-नाद-व्यङ्ग्यस्फोटस्तु अन्तःकरणावच्छिन्नश् चिदात्मैव। तत्र व्यञ्जकस्य मध्यमाख्यध्वनेः अनित्यत्वात् औपाधिकमनित्यत्वं चिदात्मभूते स्फोटेऽपि इति कृत्वा व्यञ्जकस्य ध्वनेः अनात्मत्वम्, व्यङ्ग्यस्य चिदात्मभूतस्य स्फोटस्य नित्यत्वम्, विवृण्वत् व्याकरणमपि आत्मानात्मनोः विवेकं साधु विदधात्येव। अथ च तत्तच्छब्देषु प्रक्रियाबोधनपुरःसरं नित्यशब्दस्यैव साधुत्वबोधने तात्पर्यमस्य व्याकरणशास्त्रस्य। उक्तञ्च—

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ।
सत्यं यत्तत्र सा जातिः असत्या व्यक्तयोः मताः[९]॥

अनयापि कारिकया जातिव्यक्त्योः सत्यत्वमसत्यत्वञ्च प्रतिपादितमस्ति। पुनश्चान्ते महोदेवो मर्त्यां आविवेश। महता देवेन नः साम्यं यथा स्यात्' इति भाष्योक्त्या मुक्तिस्वरूपं तत्प्राप्यत्वञ्चापि सङ्केतितमस्ति। आचार्य–श्रीभर्तृहरिणापि वाक्यपदीये उच्यते––

अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम्।
प्राहुर्महान्तमृषभं येन सायुज्यमिष्यते॥[१०]

एतेन भारतीयदर्शनस्य लक्ष्यं पूरयत् एतद्व्याकरणं सुष्ठु दर्शनपदवीमधिरोहति। किञ्च पराभिधायाः वाचः एव

१–तत्रैव (८–२–६४)
२– " (३–१–१)
३– " (३–१–२)
४– " (३–१–३)
५– " (६–४–१)
६– " (६–४–१२९)
७–" (६–४–२२)
८–सि० कौ० दीङो युडचि क्ङिति (अष्टा० ६।४।६३)

एवमेव असिद्धवदत्राभात् (अष्टा०६–४–२२) सूत्रे च (वा ४०६२) द्रष्टव्यम्।

९–वैयाकरणभूषणसारे कौण्डभट्टेन उद्धृतम्, तत्रैव द्रष्टव्यम्।
१०–वा० प० ब्रह्म० का० १३१

विवर्तभूतं तरङ्गद्वयम्--एकं शब्दरूपम्, द्वितीयञ्चार्थरूपम्। तत्राद्यं सद्रूपं संविद्रूपञ्च। द्वितीयं सद्रूपमानन्दरूपञ्च। अत एव प्रथमस्यैव प्रकाशकत्वं, द्वितीयस्य प्रकाश्यत्वम्। प्रथमस्यैव वैदिकवाग्रूपत्वम्, पश्यन्तीरूपत्वम्, तन्त्रशास्त्र-दृष्ट्या पार्वती रूपत्वञ्च। द्वितीयस्य परमेश्वररूपत्वमानन्द-रूपत्वेनाभिलष्यमाणत्वञ्च। अत एव श्रुतिरपि वदति--नामरूपे व्याकरवाणीति'। तत्र नामपदेन पश्यन्त्यादि शब्दरूपो विवर्तः, रूपपदेन च परमेश्वरादिः पृथिव्यन्तः अर्थरूपो विवर्तो गृह्यते। अतएव महाकविना श्रीकालिदासे-नापि रघुवंशमहाकाव्यस्य आदिमे श्लोके वागर्थयोरुपमा-नत्वं पार्वतीपरमेश्वरयोश्चोपमेयत्वं वर्णितम्। तथाहि--

वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ॥

अनेनापि व्याकरणस्य दर्शनत्वं सुदृढकोटिमाटीकते।

पाणिनीयव्याकरणस्य समाजोपयोगिता—

पाणिनीयव्याकरणे समाजोपयोगिनः बहुविधा विषयाः निर्दिष्टाः सन्ति। यथा--वृद्धिः शब्दमादितः प्रयुञ्जानो महामुनिः पाणिनिः एतच्छास्त्रमध्येतृणामध्यापयितॄणाञ्च, मङ्गलं भवतु इति निर्दिशति। अनेन इदं ज्ञायते यत् समाजेऽपि कस्मिंश्चिदपि कार्ये प्रवर्तमानो जनः वृद्धिसूचकं मङ्गलं कुर्यात्। तेन हि मङ्गलाचरणेन उत्साहवृद्धिः, कार्यस्य निर्विघ्नपरिसमाप्तिश्च भवति इति सङ्केतः प्राप्यते। अषडक्षाशितङ्ग्वलङ्कर्मालम्पुरुषाध्युत्तरपदात्खः[1]' इत्यादि सूत्रेण-अषडक्षीणो मन्त्रः' इति प्रयोगसाधन द्वारा इदं ज्ञाप्यते यत् काचिदपि मन्त्रणा द्वाभ्यामेव विधेया इति सूच्यते। उक्तञ्चान्यत्रापि--'षट्कर्णो भिद्यते मन्त्रः' इति। एतावता द्वाभ्यामेव सम्पाद्यमानो मन्त्रः स्थिरायते, वाञ्छितं फलञ्च प्रसूते। आशितङ्गवीनमरण्यम्' इति द्वितीयप्रयोगेण सूच्यते यत् राष्ट्रे प्रचुराणि अरण्यानि भवेयुः। तत्र गावः महिष्यादयश्च ग्राम्याः पशवः यथेच्छं तृणं चरन्तु यतश्च दुग्धस्य, दध्नः, घृतस्य च प्राचुर्येण सम्पत्तिः राष्ट्रे भवेत्, तेन समाजः बलवान्' बुद्धिमान्, प्रगतिशीलश्च स्यात्। कृषिप्रधाने भारतवर्षे तु एतादृशी स्थितिः परमावश्यकी। अलं कर्मणे अलङ्कर्मीणः पुरुषः' इति तृतीयोदाहरणेन ध्वन्यते यत्पुरुषः, कर्मकरणे समर्थो भवेत्, तत एव कर्म कृत्वा इदं फलं सम्पादयितुं प्रभवि-ष्यति, समाजस्य च समीचीनां रक्षां कर्तुं शक्ष्यति, अन्यथा अकर्मण्योजनः समाजे घृणापात्रं भूत्वा समाजं विकारयि-ष्यति। एवमेव संसृष्टे'[2] व्यञ्जनैरुपसिक्ते[3]' इत्यत्र तत्र संस्कृतम्' तेन संस्कृतम्'''तत्र संसृष्टम्' तेन संसृष्टम् 'इत्यर्थ चतुष्टयेन एकविधः एव प्रयोगः साद्ध्यते दाधिकः' इति। तेन दध्नि संस्कृतः ओदनादिः अथवा दध्ना संस्कृतः' दध्नि संसृष्टः अथवा-दध्ना संसृष्टः' एतैः चतुर्भिः प्रकारैः भोजनव्यवस्थायां बहुविधत्वं ज्ञाप्यते। एवमेव प्रहासे च मन्योपपदे मन्यते रुत्तम एकवच्च[4]' इति सूत्रेण बोध्यते यत् समाजे प्रहासोऽपि आवश्यकः। तत्र वाक्स्खलनं भवत्येव, किन्तु प्रहासः आनन्दं वर्धयति, मनोमालि-न्यञ्च दूरीकरोति। ये च धातवः उभयपदिनः, तत्र कर्तृ-गामिनिक्रियाफले आत्मनेपदस्य प्रयोगः, परगामिनि क्रिया-फले तु परस्मैपदस्य प्रयोगः। अनेनापि आत्मार्थपरार्थयोः कार्ययोः भेदः सूचितोऽस्ति। स्वतन्त्रः कर्ता[5]' इत्यनेन स्व स्व क्रियायां कर्तुः स्वातन्त्र्यं भवेत्तदैव सुष्ठु कार्यनिष्पत्तिः सम्पद्यते नान्यथा। एवञ्च तत्तत्क्रियायां सामाजिको जनः स्वातन्त्र्यं प्राप्नुयात्, अन्यथा सा क्रिया साधुतरा न सम्पा-

१—अष्टा० (५-४-७)
२—अष्टा० (४-४-२२)
३—तत्रैव (४-४-२६)
४—तत्रैव (१-४-१०६)
५—अष्टा० (१-४-५४)

दिता भवेत् । किञ्च सन्ति तादृशान्यपि सूत्राणि यैः सामाजिकमन्यदपि कार्यं प्रसाध्यते । यथा—षट्पद युक्तैः सूत्रैः वृश्चिकदंशजनितव्यथोपशमनं क्रियते । तथाहि तादृशं सूत्रम्—'युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः[१]' इति षट्पदयुक्तं सूत्रम् । अस्य वैशिष्ट्यन्तु मया नैकेषु स्थलेषु प्रत्यक्षमनुभूतम् । एतस्य जपेन वृश्चिकविषस्य दूरापसारणमवश्यमेव भवति । तथैव—दाधर्ति दर्धर्ति—दर्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्याऽऽगनीगन्तीति च[२]' इति सूत्रस्य जपेन अथवा नेर्गदनदपतपदघुमास्यति हन्ति याति वातिद्रातिप्साति वपतिवहति शाम्यति चिनोतिदेग्धिषु च[३]' इत्यस्य जपेन सर्पविषस्यापहरणं भवति । अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः[४]' इति सूत्रस्य जपेन तृतीयकस्य चातुर्थिकस्य वा ज्वरस्यदूरीकरणं भवति । एकोगोत्रे'[५] इत्यस्य जपेन शत्रुवंशे एक एव कश्चन पुरुषो जीवितः स्यात्, अन्ये सर्वे मरिष्यन्ति ।

एवमेव—वृद्धिरादैच्'[६] इत्यस्य जपेन धनस्य, बलस्य, ऐश्वर्यस्य, विद्यायाश्चाभिवृद्धिः भवति न्यायालयीयविवादोशान्तिर्भवति । एतावताऽपि समाजे प्रचुराशान्तिः सम्भाव्यते । पाणिनीयव्याकरणस्य एतादृशं महत्त्वं ज्ञातव्यम् ।

पाणिनीयव्याकरणस्यधर्मसाधनता——

महामुनिः पतञ्जलिः ब्रवीति यत्-'शास्त्रज्ञानपूर्वकेप्रयोगे अभ्युदयः अथ च लोकतोऽर्थप्रयुक्ते शब्दप्रयोगेशास्त्रेण धर्मं नियमः क्रियते' इत्याद्युक्तिभिः ज्ञायते यत् शास्त्रज्ञानपूर्वकं यः शब्दं प्रयुङ्क्ते तस्य धर्मोत्पत्तिः, तेन च ऐहलौकिकं पारलौकिकञ्च सुखमवाप्यते । तदप्युक्तम्—एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गेलोके च कामधुग्भवति' इति । अन्यत्रापि पुण्यजननाय साधुभिर्भाषितव्यम् न असाधुभिः पापजननाय' इति । आचार्येण भर्तृहरिणापि—

अपोद्धारपदार्था ये ये चार्थाः स्थितलक्षणाः ।
अन्वाख्येयाश्च ये शब्दा ये चापि प्रतिपादकाः[७] ॥
कार्यकरणभावेन योग्यभावेन च स्थिताः ।
धर्मे ये प्रत्यये चाङ्गं सम्बन्धाः साध्वसाधुषु[८] ॥
ते लिङ्गैश्च स्वशब्दैश्च शास्त्रेऽस्मिन्नुपर्वणिताः ।
स्मृत्यर्थमनुगम्यन्ते केचिदेव यथागमम्[९] ॥
शिष्टेभ्यः आगमात् सिद्धाः साधवो धर्म साधनम् ।
अर्थप्रत्यायनाभेदे विपरीतास्त्वसाधवः[१०] ॥

एतैः बहुविधैः प्रमाणैः ज्ञायते यत् एतद्व्याकरणनिष्पादिताः शब्दाः साधवः त एव प्रयुक्ताः सन्तः धर्ममुत्पादयितुं क्षमन्ते । अतश्च व्याकरणशास्त्रस्य ईदृशो महीयान् महिमा यत् ताम्बूलं भक्षयन् सुखेन शय्यायां शयानोऽपि यदि साधु शब्दान् प्रयुङ्क्ते तदा अनायासेनैव धर्मोत्पत्तिर्भवति । मीमांसा धर्मशास्त्रादि प्रतिपादितैः सन्ध्योपासनादिकर्मभिस्तु धर्मोत्पत्तिः अवश्यं भवति, किन्तु तादृशकर्मसम्पादने क्लेशाधिक्यं जायते इति न तिरोहितं लोके ।

---

१—तत्रैव ( १—४—१०५ )
२— ,, ( ७—४—६५ )
३— ,, ( ८—४—१७ )
४— ,, ( ५—४—७७ )
५— ,, ( ४—१—९३ )
६—अष्टा० ( १—१—१ )
७—वा० प० ब्र० कारिका २४
८—तत्रैव, कारिका २५ ।
९—तत्रैव, कारिका २६ ।
१०— ,, कारिका २७ ।

पाणिनीयव्याकरणस्य वेदमूलकत्वं,

वेदशास्त्रोपयोगित्वञ्च –

एतच्च पाणिनीयव्याकरणं वेदमूलकमस्ति इत्यत्र नास्ति सन्देहलेशावसरः। तथाहि—

सक्तुमिव तितउना पुनन्तो
यत्र धीरा मनसा वाचमक्रत।
अत्रा सखायः सख्यानि जानते
भद्रैषां लक्ष्मीर्निहिताऽधिवाचि[1]॥ इति

ऋग्वेदस्य मन्त्रमुद्धरता महामुनिना पतञ्जलिना अस्य वेदमूलकत्वं सोसूच्यते। अथ च -

चत्वारि वाक्परिमिता पदानि—
तानि विदुर्ब्राह्मणा ये मनीषिणः
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति[2]॥ इति॥

इदमपि ऋग्वेदीयं मन्त्रमुद्धरन् महाभाष्यकारः पाणिनीयव्याकरणस्य प्रतिपाद्यं यत् वाक्चतुष्टयं तत् बीजरूपेण उक्त मन्त्रे सङ्केतितमस्ति। अथ च—

यज्ञेन यज्ञमयजन्त देवास्तानि
धर्माणि प्रथमान्यासन्।
ते ह नाकं महिमानः सचन्त यत्र
पूर्वे साध्याः सन्ति देवाः[3]॥

इति यजुर्वेदमन्त्रे प्रथमे यज्ञपदे इज्यते येनासौ यज्ञः यागादिव्यापारः इति करणव्युत्पत्तिर्दर्शिता। द्वितीये यज्ञपदेतु इज्यतेऽसौ यज्ञः विष्णुः इति व्युत्पत्तिर्दर्शितास्ति।

तत्र 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति पाणिनीय-सूत्रमेव साधुत्वसम्पादकम्। अथ च वेदोपयोगिताप्यस्य व्याकरणस्य प्रचुरमात्रायां वर्तते। तथा चोक्तं महाभाष्यकृता- कानि खल्वस्य व्याकरणाध्ययनस्य प्रयोजनानि? रक्षोहागमलघ्वसन्देहाः प्रयोजनम्' इति। आभ्यां प्रश्नोत्तराभ्यां स्पष्टमेव प्रतीयते यत् वेदस्य रक्षादय एव व्याकरणाध्ययनस्य मुख्यानि प्रयोजनानि। लौकिकशब्दानां पुण्यजनकतावच्छेदकसाधुत्वज्ञानम्, अन्यच्चाप्यानुषङ्गिकं बहुविधं प्रयोजनं महाभाष्योक्तं द्रष्टव्यम्। तथाहि इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि—तेऽसुराः। दुष्टः शब्दः। यदधीतम्। इत्यादि।

एतावता निबन्धेनायं निष्कर्षः आयाति यत् संस्कृतभाषाया अमरत्वसम्पादकमेतत्पाणिनीयव्याकरणमद्यत्वे वेदाङ्गतया प्रवर्तमानं चकास्ति। नास्त्यन्यदार्षं व्याकरणं, यदद्यत्वे वेदाङ्गतामनुभवेत्। एवञ्च वेदोक्तबीजकमेतच्छास्त्रं वेदरक्षायै महान्तमुपकारं विदधत् वर्तते। न हि केवलं वेदरक्षामेव विदधाति अपितु लौकिकशब्दसाधुत्वमपि विज्ञापयति। बहुविधां सामाजिकीं व्यवस्थाञ्चापि प्रकाशयति। आत्मानात्मविवेचनद्वारा मोक्षसाधकमप्यस्ति। अतः श्रोतॄणां महते कल्याणाय निबन्धोऽयं भवेदिति आशासानो विरमति विदुषां विधेयः।

बाँकेलाल मिश्रः
संस्कृत प्रवक्ता, काशीविद्यापीठे
वाराणस्याम

---

१-ऋ० १०।७१।२
२—तत्रैव १,१ ६४, ४५
३—यजु० ३१।१६

# प्रत्यभिज्ञादर्शनम्

'हंसः'

संस्कृतसाहित्यस्य ह्रासयुगे खीष्टीयत्रयोदशशतकान्ते सायणदुग्धाब्धिकौस्तुभेन माधवाचार्येण स्वकीये 'सर्वदर्शन-संग्रह' ग्रन्थे समासतया अस्य दर्शनस्य वर्णनं सम्यक् कृतम् वर्त्तते। परवर्तिग्रन्थकारमूर्द्धन्येन माधवाचार्येण प्राचीनतमाया भारतीय परम्परायाः परिपालकशैली मनुसृत्य स्वीकारेण स्वकीयोऽयं ग्रन्थः संग्रथितः।

एततत्पूर्ववर्त्तिभिः दार्शनिकशिरोमणिभिः कश्मीर-दर्शन परम्परां प्रस्थानरूपेण प्रस्थापयद्भिः श्रीकण्ठशिष्यैः तच्छिष्यक्रमे संक्रमितैराचार्य-प्रवरैः शुभाभिनवगुप्तपादाचार्यादिभिश्च प्रत्यभिज्ञादर्शनस्य स्वतन्त्रं प्रस्थानं स्वीकुर्वद्भिः दर्शनस्यैतस्य स्वरूपं प्रारूपं वा न्यरूपि।

एतत्कालपर्यन्तं दर्शनस्यैतस्य परम्परा यथातथमेव परिचलिता दरीदृश्यते। भारतीयदर्शनेषु स्वरूपं स्फारयद् स्वकीयं वैशिष्टयं व्यंजयत्, स्वकीयं प्रास्थानिकं पारम्परिकं ज्ञानगौरवम् उद्गूर्णयत्, स्वकीयं स्वतन्त्रं प्रकाशं विस्तारयदेतद्दर्शनम् विश्वदर्शनेषु महत्वपूर्णं प्रकाशात्मकं पदं स्वतः प्रतिष्ठापयति।

श्रुतेः सादृश्यं संदधति तन्त्रशास्त्राणि सन्ति सहस्रशः भारतवर्षे साम्प्रतमपि समुपलब्धानीति तन्त्रशास्त्रेषु जीवनस्य सर्वे पक्षाः सुप्रतिपादिताः सन्ति। अत्र सर्ग-प्रतिसर्गवर्णनम् प्रचुरतया प्राप्यते। विश्वोत्पत्तौ भुवः स्थानम्, भूतले पर्वतानां[1], नदीनां, स्रोतसां, तीर्थस्थानानां देवस्थानानां च सम्यक्वर्णनम् अत्र मिलति। ज्योतिषां नक्षत्राणां तारकाणां[2] ग्रहाणाम् पुरनगराटवीनां संस्थानं च समुपवर्णितम् अस्ति। तंत्रेषु समेषां शौचाचाराणां, उपासनापद्धतीनां निरूपणं. प्रेत, पितृ[3], देव गन्धर्वादीनां लोकव्यवस्थया स्वर्गनरक-संस्थाधिकार-निर्देशपूर्वकम् सर्वं समस्तदैवरहस्योद्घाटनम् कृतं वर्त्तते। अत्र शास्त्रे युग-धर्मस्य प्रचुरा व्याख्या, राजधर्मस्य च प्रतिपादनम् अस्ति। एतादृश्युपकारिणि शास्त्रे मानव-जीवनसंवहन-सामर्थ्य-निर्देशेन सहैवात्मविषयाणामनात्मविषयाणाञ्च वर्णनमास्ते।[4]

यथा देवानां वरिष्ठः विष्णुः वीराणांजयनशीलानां जिष्णुः, भूतानां भविष्णुः ह्रदानां समुद्रः नदीनां जाह्नवी, पर्वतानां हिमालयः, वृक्षेषु अश्वत्थः, देवीषु दुर्गा वर्णेषु ब्राह्मणः सर्वश्रेष्ठः तथैव समस्तशास्त्राणाम् तन्त्रशास्त्रम् अनुत्तमम् भवति[5]।

तन्त्रशास्त्रम् सर्वोपकारि शास्त्रमित्यत्र नास्ति केषामपि विप्रतिप्रत्तिः। यद्यपि तन्त्रेषु वामाचारादिपद्धतीनामपि दर्शनम् भवति तदापि निरपेक्षबुद्धया समालोचनेन इदं सुष्पष्टं भवति यत् तन्त्रशास्त्रम् स्वकीयं स्वातन्त्र्यशक्तिसारसामरस्यं निर्वहद् जिज्ञासूनां सहृदयाणां चेतांसि चमत्करोति। स्वकीयेन विलक्षण-बुद्धिबलेन, प्रतिभावैभवेन, मेधाध्व-ध्वान्तविध्वंसिधिया तंशास्त्रप्रवर्त्तकाः शास्त्रकाराः स्वतंत्रं प्रस्थानं प्रस्थापितवन्तः प्रथितवन्तश्च।

---

१—तंत्रालोकः ८।१०५ (२) ८।१०६—

२—त. ८।२४-२५-३०, स्व० १०।५३-७१

३—सत्यार्थ विवेकः द्वितीयः समुल्लासः पृ० ४२३

४—मत्स्यसूक्तम्

५ —उपेयुषां शैव तपोधनानां कालाननानां शिवशासनानाम्। विद्यार्थिनां पाशुपत व्रतानांमध्यम्न वस्त्रादिसमर्पणाय—

साधकाः आगमान्तर्गत-समागतैः परम्पराप्राप्तैः चिरात् चिरन्तनचिन्तनविचित्रैः विचारैः न केवलं समग्रमेव विश्वंस्पृशन्ति अपितु तात्त्विकताया विवेचनेन सर्वं-रहस्यगर्भं भेदाभेदवादं विश्लिष्यविश्लिष्य स्वस्मिन्नेव सर्वमात्मसात्कुर्वन्ति। धरात आरभ्य परमशिवान्तं याति तन्त्र-प्रणेतॄणां धिषणा। प्रत्यगात्मानं परित अवगाहते तेषां मनीषा। तेषां प्रज्ञा परिधौ सर्वथाऽविभाजितमपि तत्वं विभागावभासयिषया मन्ये स्वकं स्वयमेव विवृण्व-दुपतिष्ठते! अतएव ते जिज्ञासूनां मनांसि शाश्वतम् स्वतः समाकर्षन्ति। सम्प्रति वर्ण्यमानं प्रत्यभिज्ञा-दर्शनमपि तेषां समर्चनीयानामाचार्यचरणानां चेतनां परिचुम्बति। पाठकानां कृते चेतनामृतं च वितरति। केवलं प्रत्यभिज्ञयैव परममाहेश्वरत्वं प्रतिसम्पादयदेतत् शास्त्रम् शिवशिरसश्चन्द्रशकलमिव शास्त्रशिरोमणित्वम् संतनोति संवहति च। एतत्प्रत्यभिज्ञाशास्त्रमपि आगमपरम्परायां शैवागमेषु प्रधानत्वेन कीर्त्यते। आगमग्रन्थास्तु त्रिभाग-विभक्ताः सन्ति। प्रथमे सदाशिवोक्ताः, द्वितीयतः पार्वती-प्रोक्ताः तृतीयतः ऋषिप्रणीताः। त्रयोऽपिविभागा वेदविद्या-वदेव विज्ञेषु संवेद्याः समादृताश्च सन्ति। सर्व एते तत्वानां तात्विके विचारे प्रचिताः चारुतां भजन्ते।

केचिदेवं प्रवदन्तः सन्ति यत् तंत्रग्रन्थाः तन्त्रपरम्परा वा अभारतीया, आर्यविचारपरम्परा-प्रतिकूला अवैदिकी काचित् पद्धतिः। अतएव न तथा समादरणीया मान्या वा यथा श्रुति-स्मृति-पुराण-परम्पराप्राप्ता आर्यर्षिभिः संग्रथिताः गीर्वाणवागुद्गीर्णा आर्षग्रन्थाः। किन्तु नैषा समीचीना विचार सरणिः। तन्त्रग्रन्था अपि भारतीयमस्तिष्क-विचार-तन्तुभिस्तन्विताः समग्रां संस्कृतिं स्तृणन्ति पुनंति च।

निगमवत् आगमेष्वपि शर्व-शेमुषीजुषां महनीयानां विचारधारायाः तात्विक प्रत्यवमर्श-पीयूषपूरितः स्वाभा-विकः भव्यभर्गभूतिभरितः पावनः प्रवाहः साम्प्रतिकानां समीक्षकाणामपि चेतांसि चोरयति!

सर्वं तंत्र शास्त्रं विषय-प्रधान-विचार-दृष्ट्या सप्तसु भागेषु विभाज्यमस्ति। प्रथमस्तावत्तस्य विभागः ज्ञानकाण्ड-माश्रित्य भवितुमर्हति। अस्मिन् विभागे प्रथमतः ज्ञान-काण्ड प्रधानानि तन्त्राणि समागमिष्यन्ति। द्वितीयतः कर्म-काण्डप्रधानानि, तृतीयतः वैष्णवउपासना-प्रधानानि तन्त्राणि, चतुर्थतः सूर्य उपासना तन्त्राणि, पंचमतः शक्ति-उपासना तन्त्राणि, षष्ठः गणपति उपासना तन्त्राणि, सप्त-मतः शैवोसेना प्रधानानि। एतेषु शैवोपासना प्रधाने एतस्मिन् मुख्यतया चत्वारः मतवादाः प्रस्थानभेदैन भिन्ना समन्विते ष्वप्यनन्विता इव-प्रचलिताः दरीदृश्यन्ते। ते यथा— १-शैवमतवादः, २—कालानन मतवादः ३—शिवशासन-मतवादः चतुर्थश्च पाशुपत मतवादः[१]। वामन पुराणेऽपि एतेषां चतूर्णां मुल्लेखो वर्त्तते[२]। विदुषां श्रीमतां यामुनाचार्या-णामागम प्रामाण्ये नामके ग्रन्थेऽपि ऐषांविभागानामुल्लेखः मिलति।[३] एवमेव शिव पुराणेऽपि उपर्युक्तानां मतवादानां विषये सविस्तरं प्रतिपादितं वर्त्तते।[४]

वाचस्पति मिश्रस्य-शारीरके[५] भाष्ये, हरिश्चन्द्र सूरेः सद्दर्शन समुच्चये,[६] सुप्रमोदगामस्यक्रियापदेष्वपि एते मत-

१—वामन. ६।८६-६१ मलकापुरम्-प्रस्तरोत्कीर्णलेख समयः ११८३ ई० २—आगम प्रामाण्ये पृ० २६
३—शिवपुराण-वायवीयसंहिता २६
४—माहेश्वराश्चत्वारः शैवाः, पाशुपताः, कारुणिककारुकसिद्धान्तिनः कापालिकाश्चे (शरीरकभाष्य वाचस्पति)
५—Sir John Marshal—'Mohanjodno and the Indus Civilization।
६—वेदान्तस्तोत्र संग्रहे शिवस्तोत्रे २

वादाः समुपवर्णिताः इति। एतैः प्रमाणैरिदं फलितं भवति यत् एक एतादृशोऽस्ति समयः यदा समग्रे भारतवर्षे एषां प्रचुरः प्रचारः आसीत्। इतिहासादिदं विज्ञायते यत् एतेषु चतुर्ष्वपि अनेका शाखा प्रशाखाः आसन्। सर्वेषां किंचिद् किंचिद्भेदभिन्नं शास्त्रीयं स्वरूपमप्यासीत्।

इमाः सर्वाः शाखाः स्वतंत्राभिर्मर्म्मस्पृग्भिरास्थाभिः संचालिताः पुरातनान् विश्वासान् संवहन्त्यः आनन्दस्यन्दिन्यः ज्ञानस्रोतस्विन्य इव शास्त्रेषु स्वीकृताः सन्ति।

सांस्कृतिकसौरभसौदर्येषु धिषणा–प्रकाश–रश्मिसंज्ञापितेषु ज्ञानेषु सर्वोत्कर्षेण वर्त्तमानेषु रहस्यविश्रम्भेषु शैवसिद्धान्तानामनुत्तमत्वं सर्वानुमतमिति। भारत भूमण्डले विविधेषु परिवर्त्तितेषु मतवद रूपेषु एतस्यागमस्यास्तित्वं परिकल्पितुं शक्यते। भारते तु वीरशैव-सिद्धान्तरूपेण दक्षिणभारतवर्षे कर्नाटके, शैव सिद्धान्तरूपेण तामिलनाडु प्रान्ते प्रसृताः काश्मीर-प्रदेशे चाद्वैतशिवदर्शनरूपेण प्रस्थानमात्र भिन्नतामलंकुर्वाणा विश्रुता सिद्धान्ताः विदुषां चेतसः सुखावहतां संभजन्ते।

ऐषु मार्गेषु सन्ति बहुशः सामान्यतया सामान्यानि–विचाररुचिराणि, तदपि विशिष्टानि वैषम्याणि च विलसन्ति सतां विदुषां मोदमावहन्ति। परम्परया–परिज्ञायते यत् भारतवर्ष प्रसूतीनां स्तन्यत एव दर्शनजन्य ज्ञान संस्कार शालितायाः पीयूषपरिष्कृतं तत्त्वं प्राकृततया प्राप्तं भवति। जगतां विभिन्नेषु क्षेत्रेषु विषयेषु प्रवृत्ति दृश्यते। भौतिकेषु भूतिमत्सु संभोगाभोगभव्येषु तेषां भावाः संभरन्ते किन्तु भारते भेदभूधरभेदनरते–भुवः विभूतिभूषिते भूभागे विषयाणां सीम्नः समतिक्रम्यैव शान्तिमाप्नोति शेमुषी। इयमेवात्रत्या विशिष्टता जन्मत एव भारतीयानामियमनुभूतिर्बोभवीति यत् सर्वत्रैव क्वापि सर्वव्यापा शक्तिस्सुतरां संराजत इति। पाताले चान्तरिक्षे दशदिशिगमने सप्तशैले समुद्रे मश्मनि काष्ठे च लोष्टे, क्षिति जल वियति स्थावरे जङ्गमेवा सैकैव शक्तिः शोभतेतमाम्[1]। सर्वेषां वस्तु जातानां जनित–जनिष्यमाणानां प्राणिनां वा कारणभूतः कश्चिदद्भुतभावनः भूषितो वर्त्तते बुभूषति च नितरामनवरतमिति।

एतस्यामेवावस्थायाम् दर्शनस्य प्रादुर्भावः भवति। दर्शनानामियमेव दृष्टिः यत् विश्लिष्य विश्लिष्य–तत्वानां रहस्यं समुद्घाट्यच, समावृतानां वृत्तीनां कपाटं, वास्तविकं सत्यं तथ्यं च विज्ञानवान् ज्ञायात् जानीयात्। आहोस्वपौरुषेय-वाङ्मयेषु श्रुतिषु यावत्यः ऋचः मंत्राः सूक्ता वा सन्ति, सर्वत्र आध्यात्मिकया भावनाया एवं प्राधान्यमनुभूयते।

इदं विद्वद्भिः सर्वथैव स्वीक्रियते यत् एतद्देशीयैः विचारकैः मननशीलैः मुनिभिः, शेमुषीसुश्रीकैः ऋषिभिः समाधिनिष्ठैः योगिभिः अन्तर्मुखविज्ञानविद्भिः शास्त्रसाररहस्य–समुद्घाटन पटुभिः शास्त्रकारैः यद्यदनुभूतं तत्तदेवैव तैः विखरवागात्मनि प्रतीकितम्। सर्वं तत् तत्रभवताम् तपःनिस्यन्द समुद्भूतम्–अभिनव दृष्टिप्रमाणभूतमेव।

इदमेतद्देश–प्रसूताग्रजन्मनां पूतं साम्प्रतिकं कर्त्तव्यं तावदास्ते यत्तेषां ज्ञान विज्ञान प्रकाश रश्मिभिः स्वान् संयोजयामः न त्वाधुनिकभौतिक-वाद-चाकचिक्य–चमत्कार चमत्कृताः भूत्वा सदाचार चर्यामपि विस्मरामः इति।

ननु शिवपार्वतीप्रोक्ताः तन्त्रग्रन्थाः न सन्तीति, तेषाम् देवरूपत्वात्, लेखने चस्थूल–भौतिकशरीरस्य च प्रयोजकत्वादितिचेन्न, यस्य निःश्वसितं वेदा इतिवत् शिवपार्वतीप्रोक्तत्वेऽपि सन्देहानवसरत्वात्। शिवशक्तिस्वातन्त्र्यसत्त्वाद्वैतत्सुतरां सम्भाव्यत एव। वेदानां यथा अपौरुषेयत्वेऽपि

१—तं० आ० ३।८५५ प. १२

प्राकट्यं परेच्छया स्वीक्रियते तथैव शैवागमानामपि प्राकट्यं परममाहेश्वरैः साक्षात्शिवरूपतां प्राप्तैः श्रीकण्ठादिभिराचार्यैः सर्वथा सम्भाव्यते । एतेषां सर्वत अभ्रान्तत्वात्, ज्ञानस्य ज्योतिषा दीप्तिमत्वात् प्रतीयत इत्थमेव यत् सर्वे शैवागमाः भक्तजनानामुपरि सदनुग्रह रूपा एव प्रणेतॄणां मस्तिष्केषु शिवेनाभ्यार्नर्पिताः ।

प्राक्भारतीयोपासना परम्परायां पञ्चोपासनायाः पद्धतिः पूर्णतया प्रचलिता आसीत् । सम्प्रति विष्णोः अधिकाधिकं पूजनार्चनादिकम् प्रचलितं वर्त्तते । अन्येषां शिव-शक्तिसूर्य–हेरम्बादीनां तु क्वाचित्की गौण रूपा एव दृश्यते । आगमेष्वपि सर्वेषां पञ्चानामुपास्यानां कृते तंत्र-ग्रन्थाः उपलभ्यन्ते । तेषु वैष्णवागमेषु विष्णुयामल, वृहन्नारदीय, हरिरहस्यादिषु ग्रन्थेषु विष्णोः सम्यक् महत्व मुपासनावैचित्र्यं वर्णितमास्ते । शैवागमेषु च रुद्रयामल, सिद्ध दिगम्बर, शिवविलास, स्वच्छन्द तंत्र मालिनीविजयोत्तर तंत्रादिग्रन्थेषु, शिवस्य, गणेशागमेषु गणपतिसूक्तगणेश विमर्शिणी सिद्धेश्वर तंत्रादिषु गणपतेः, सूर्यागमेषु वृहत्पाराशरीयादित्ययामलसप्तशिख्यादिषु सूर्यस्य तथैव शक्तितंत्रेषु शक्तियामल, देवीविलास कुलार्णव तंत्रालोकादिषु शक्तिसमुपासनायाः सम्यक् वर्णनम् कृतमास्ते । अनेन इदं सुस्पष्टं भवति यत् आगममाध्यमेन शताधिक-संवत्सरं यावत् भारतीयविचारकचक्रेण चिराय सामाजिकयाः चेतनायाः चिकित्सा कृता । सामाजस्य सर्वेषु क्षेत्रेषु आगमिक्याः चितेश्चित्राभिर्मरीचिभिश्चिरन्तन चरमचिन्तन-चन्द्रिकाभिः परमशिव समुदभूत प्राकृत प्रकाश–रश्मिभिरभिनवा क्षणे क्षणे रमणीया जीवनस्पृहा प्रौढं परिलक्ष्यते ।

भारतीयविद्यानां विद्वांसोऽध्येतारः सम्यगनुभवन्ति सत्यमिदं यत् दर्शनसतत्वस्य रहस्यमुदघाटयदिभः आगम-सिद्धान्त प्रवर्तकैराचार्यैः–समानान्तर प्रचलितां वैदिकीं मतवादितामात्मसात्कृत्य सर्वसुलभम् सरल–सुभग–मध्यम-मार्गमनुसरदिभः दर्शनादर्श फलके समर्थतया–स्वात्मचित्तं प्रस्तुतमकारि । त्रिभावात्मकस्य वेदस्य परम्परा प्राप्ता आध्यात्मिकाधिदैवाधिभूता भावा व्याख्यातृभिर्व्याख्याताः किन्तु शैवागमेषु सविशेषम् एकस्यैव परममाहेश्वरभावस्य स्थापना कृता वर्त्तते । समस्तमाधिदैविकम् आधिभौतिकं रूपम् तस्यैव परमेश्वरस्य आध्यात्मिकं प्रतिबिम्बमिति । विशेषतया शैवागम परम्परा प्राप्तस्य प्रत्यभिज्ञादर्शनस्यैव सर्वातिशायि वैलक्षण्यम् यत् प्रत्यभिज्ञात एवात्मनः शिव-स्वरूपे अयमहं साक्षात्परमेश्वर एवेति तत्त्वज्ञानं जायते इति । परमशिवस्तु सृष्टि–स्थिति–संहार–तिरोधानानुग्रह पंचस्वभाववान् स्वात्मन्येव प्रकाश–संवित्तिभित्तौ सर्वमवभासयति ! सर्वस्य दृश्यादृश्यात्मकस्य जगतः प्रकाशमात्र-सारत्वात् प्रकाशान[1] तिरिक्तत्वम् स्वतः सिद्धयति । स्वप्रकाशत्वं स्वातंन्त्र्यं[2] भवति, परप्रकाश्यत्वम् च पारतन्त्र्यम् । विश्वस्य च परापेक्षायां पारंतत्र्यं केवलमेतावदेव यत् प्रतिबिम्बावस्थायां बिम्बानुग्राह्यत्वमस्य प्रतीयते । वस्तुतस्तु सर्वमेवेदं वेद्यजातं प्रकाशात्मनः परमेश्वरस्य[3] शरीरभूतमेवेति प्रकाशात्मत्वात्परमेश्वरस्य रूपमेव । यथा सर्वतः स्वच्छे स्फटिके सर्वतः प्रतिबिम्बं भवति तथैव सर्वतः स्वच्छताजुषि बोधात्मके पारमेश्वर प्रकाशे रूपरसगन्ध-स्पर्शशब्दानां प्रतिबिम्ब ग्रहण–सामर्थ्यमस्ति । इत्थं विश्वस्य मिथ्यात्मकता स्वत एव सुनिरस्ता भवति ।

जगति जीवनस्यास्था प्रवला भवति । कदापि भौतिक्यां विभूतावनास्था न भवति । एवम् अत्र तत्र सर्वत्र परमेश्वरानुभूत्या स्वात्मनः समग्ररूपतां स्मारं स्मारं शश्वदानदबोधः उदेति । परमशिवस्य स्वातन्त्र्यमेवेच्छेति तदिच्छयैव विश्व-

(१) तदेव प. १५
(३) प्रत्यभिज्ञाहृदयम् सू० २
(२) तदेव पृ० ५६ पं. ३

ह्योन्मेषे[1] —परमानन्दमहोदधेः धन्यः धवलधामा परम-रमणीयः प्रवाहः अनुत्तरतामावहति ।

विचारकैः सततं भूयोभूयो भूरिशः विचार्यंत एव यदियं जीवनम् किमुद्देश्यकमिति ! उद्देश्यतानुसन्धाने कर्मणां: महाप्रवाहः अस्मिन् भेदमहोदधेः सम्पूरक इति संलक्ष्यते । कोऽयं कर्मप्रवाह इत्यनुचिन्तनक्षणे जीवस्य वैवश्यं विचारयद्भिः विद्वद्भिः सुतरां समनुमीयते यत् अस्ति कश्चिदत्र अदृष्टं कारणं येन शिवोऽपि ब्रह्म अपि बन्धतामङ्गीकुर्वन् स्वकीयामनुग्रह–दातृशालिताम् विस्मरति ।

परमेश्वरे सर्वकर्तृत्वं, सर्वज्ञत्वं, नित्यत्वं व्यापकत्वं न शाश्वतिकमिति सर्वैः स्वीक्रियत एव । प्रत्यभिज्ञादर्शन-पारद्दश्वनां विमर्शानुसारम् क्रमशः कला, विद्या, राग, काल, नियति नामवद्भिः संकोचापर पर्यायैः कञ्चुकैः समावृतः स्वस्वातंन्त्र्यशक्तिपरमार्थं–माहात्म्येन-समुल्लसितः स्वय-मेवोल्लिलसिषयैव सदाशिव अघोरेशः[२] विश्वरूपेण समु-ल्लसति ।

वैष्णवमते तु भक्तेः प्राधान्यं भवति । भक्तौ दासत्वमपि स्वीक्रियते । दासत्वं तु परतंत्रताया एवान्यतम रूपं भवति । पारतंन्त्र्यं च दुःखावहमेव भवति । पराभिमताः भक्ती भाविताः भक्ताः स्वकीयां स्वतां सुतरामुपेक्ष्य प्रभोः सतां स्वीकुर्वन्ति । नवधाभक्तौ तु विशेषतः श्रवण-कीर्त्तनादिभेदेषु भगवत्प्राप्तेः सुलभत्वं भृशमुपवर्णितम्–– यथा श्रवणेन—भागवते––

श्रवणं सर्वधर्मेभ्यो वरं मन्ये तपोधनाः
वैकुण्ठस्थो यतः कृष्णः श्रवणादेव लभ्यते ।

अन्यच्च

अशेषसंक्लेश शुभं विधत्ते गुणानुवादश्रवणं मुरारेः। कुतः पुनस्तच्चरणारविन्द–परागसेवारतिरात्मलब्धा ॥

( ३।७।१४ )

यत्कीर्त्तनं यत्स्मरणं यदीक्षणं
यद्वन्दनं यच्छ्रवणं यदर्चनम्
लोकस्य सद्यो विधुनोति कल्मषं
तस्मै सुभद्रश्रवसे नमो नमः ॥

( २.४।१५ )

सद्यः लोककल्मषकलङ्कपङ्कप्रक्षालनक्षमत्वात् भक्तेः प्राधान्यमेवात्र निर्दिष्टम् ! श्रीमद्भगवद्गीतायां भगवद्भाव-नायाः भक्तेः प्राधान्यमित्थं समुद्घोषितम् वर्त्तते––

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्यः अहमेवं विधोऽर्जुन !
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥

श्रीमद्भगवद्गीता

अनेनेदं सुस्पष्टमेव प्रतिपाद्यते यत् भगवत्सत्तायां प्रवेशस्य एक एव मार्गः, भगवन्तं ज्ञातुं द्रष्टुं वा एकएव पन्थाः विद्यते । सोऽस्ति भक्तेः पन्थाः । भक्तिरेव प्रभवति भगवन्तं विज्ञापयितुमेकाकिनी ! भगवान् एव सर्वथा आराध्यः ज्ञेयः द्रष्टव्यः साध्यः साक्षाच्चकर्त्तव्यः ! भगवद्भावितेन तद्युक्तेन तदाराधनतत्परेण, तज्ज्ञातुंप्रवृत्तेन तद्द्रष्टुं प्रयत्नशीलेन भक्तेनैव भगवान् ज्ञायते साध्यते साक्षाच्च क्रियतेतामिति !

श्रीमन्माहेश्वराचार्यवर्योत्पलदेवेनापि स्वकीये ईश्वर प्रत्य-भिज्ञाकारिकायाः प्रथमायामेव कारिकायां 'दास्यं' विशे-षतया समुपवर्णितम्—

(४) तं० आ० १ पृ० ६६ पं० ११-१४

कथंचिदासाद्यमहेश्वरस्य,
दास्यं जनस्याप्युपकारमिच्छन् ।
समस्तसम्पत्समवाप्ति हेतुं,
तत्प्रत्यभिज्ञामुपपादयामि ।।१।।

दीयतेऽस्मै स्वामिना सर्वमभिलषितमितिदासः, तस्य भावः दास्यम् भवति । साधकेन अनवच्छिन्नप्रकाशानन्दै-श्वर्यविप्रुड्भिः विश्वनिर्मातुः दास्यं कथंचिदेवासाद्यते गुरुकृपयेति—प्रत्यभिज्ञादर्शनेऽपि स्वीक्रियते । किन्तु एतत् दर्शनानुसारं नमस्करणीयस्य पारमार्थ्यमविजानतां, विद्यारागरञ्जितत्वमेवापतति !

शक्तिशक्तिमतोरैक्यम्--

प्रत्यभिज्ञादर्शनम् निश्चप्रचमद्वैतवादि दर्शनम् ! अस्मिन् अद्वयस्य ईश्वरस्य परमेश्वरनामधेयस्य व्याख्यानम् भवति । परमेश्वर प्रकाश रूप एव भवति । अस्मिन् प्रकाशे अन्येषु प्रकाशेषु च भेदः सुतरामायाति । अन्ये प्रकाशाः जडा विमर्शरहिताः परप्रकाश्याः भवन्ति । परमेश्वर प्रकाशे विमर्श उल्लसति । अहम् अहमस्मि इति एवं प्रकारकः स्वात्मनः अस्तित्वबोध एव विमर्शः भवति । विमर्शः शक्तिरूप एव भवति । विमर्श एव शक्ति इति कथ्यते । दार्शनिक दृष्ट्या शक्तिः एका अवस्था भवति—या प्रकाशात् परमेश्वरात् पार्थक्येन वियोक्तुं न शक्यते । उपासना कर्मकाण्ड क्षेत्रयोः शक्तिः मातृवत् परिकल्प्यते । इयमेव दुर्गा क्षमा शिवा धात्री स्वाहा स्वधादि शब्दैः शतशः व्यपदिश्यते । किन्तु दार्शनिकदृष्ट्येयं सामरस्यरूपावतिष्ठते । परमेश्वरः पंचशक्तिस्वरूप एव निगद्यते । चिदानन्देच्छाज्ञान क्रिया रूपाः एताः सन्ति । एताभिः समन्वितः परमार्थप्रकाशपरामर्श परामृष्टः परमशिवः विश्वमयः विश्वोत्तीर्णश्च भवति ।

शिवः यदि शक्तिमान् तर्हि शक्तिरहितस्य शिवस्य कल्पनाऽपि कर्त्तुं न शक्यते । शिवे इकारः शक्तिः, तया विरहितः शिवः शव एव केवलम् ! वस्तूनि सर्वाणि मेयानि भवन्ति । एतेषां मानम् प्रमाता करोति । जगत् एकं गमनशीलं शाश्वतं वस्तु । अस्य मानम् परमेश्वरः प्रमाता एव करोति । प्रमातृकल्पितम् स्वरूपं तस्यास्तित्वस्यैव निदर्शनम् भवति । मातृमानमेयानामैक्यम् वास्तविकं भवति । तथैव शक्ति शक्तिमतोरैक्यम् च शाश्वतिकमेव भवति । शक्तिमतः परिकल्पने द्वयोरैक्यं स्वयम् सिद्ध्यति ।[१]

शक्तिः शिवात् पृथक् कदापि न परिकल्प्यते ! सा शिवरूपैव । स्पन्दमाहात्म्येन क्रियाशक्तेः प्रवाहः पारिशेष्यात् प्रतीयते यत् शक्तिः शिवात् पृथक्-भूता । किन्तु एतत् भ्रम रूपमेव केवलम् । कार्याणामानन्त्यात् कारणानां चासंख्येयत्वात् तत्तत्परिणामप्रकटित पदार्थ सत्तारूपा भ्रान्तिः प्राणिनां मोहकारणमस्ति । वस्तुतः पदार्थाः परमार्थरूपेण परमेश्वररूपा एव भवन्ति । कारणानां कार्यरूपेण परिणतिः शक्तिवैचित्र्यरूपा एव । लोकः मन्यते यत् सर्वेषां पदार्थानां कश्चित् कर्त्ता वर्त्तते । सः सर्ववस्तु—वास्तु—व्यापार—सम्पादन—विशारदः अनन्त शक्ति सम्पन्नः संराजते । तस्यैव कर्तुः इयं विश्वविस्फुरण रूपा शक्तिः । तस्मिन्नेव इयती शक्तिः, इयती स्फूर्जा, इयच्चातुर्यं विद्यते, येन वस्तुमात्रस्य स्वरूपप्रथनम् साहजिकरूपेण रूपायितं भवति ।

[ क्रमशः

# भविष्यपुराणे सूर्यः

रामजी तिवारी ( अनुसन्धाता )
९९, सन्त कबीर छात्रावास, गोरखपुर विश्वविद्यालय
गोरखपुर ( उ० प्र० )

सूर्यस्य स्वरूपम् :—सूर्यस्य स्वरूपं सुस्पष्टतया भविष्यपुराणस्य ब्राह्मपर्वणः ६६ एवं ६७ तमे चाध्याययोः समुपवर्णितम् । अस्य मुख्यः वक्ता ब्रह्मा श्रोता च याज्ञवल्क्यो ऽस्ति । अत्र सूर्यः सर्वदेवात्मकः, सम्पूर्णस्य विश्वस्य साक्षी, स्वामी, कालस्य प्रवर्तकः, धाता, विधाता, शोषकः, आप्यायकः, देवानामपि देवः, पितृणामपि पिता, सकलचराचरस्याधारः, प्रकाशस्योष्मणश्च आद्यमुत्पत्तिस्थानम्, वायोः आकाशादिकस्य च कारणम्, योगिनां परमेण तपसा प्राप्यः, बालखिल्यव्यासपञ्चशिखशुकदेवादीनां प्रवेशस्थानम् एवमेव बहुविधानेनोपर्णितः । उपर्युक्ताः महान्तो जनाः सूर्यकिरणं पीत्वा योगसिद्धिं प्राप्तवन्तः तदनन्तरं मोक्षपदमनुशिश्रियुः[१] । अन्ये देवाः श्रुतिसुखदातारः सन्ति, प्रत्यक्षस्तु अयमेव सूर्यः ।[२] विषयोऽयं वाल्मीकिरामायणस्य युद्धकाण्डान्तर्गताष्टाधिकशततमेऽध्याये साम्बपुराणस्य च द्वितीयाध्यायेऽपि एभिश्लोकैरेव प्रदर्शितः ।

६७ तमे अध्याये सूर्येण केवलं स्वस्वरूपविषये ब्रह्मा उपदिष्टः । तदनुसारं सूर्यएव विश्वव्यापको जगततस्थुषश्चान्तरात्मा अस्ति । अयमेव सांख्ययोगिनां प्रधानः, प्रकृतिः, क्षेत्रज्ञः, महत्तत्वं बुद्धितत्त्वञ्च[१] । अस्य कराः पादाः नेत्राणि शिरांसि मुखाः कर्णाश्च सर्वत्रैव व्याप्ताः । एवं स सम्पूर्णं जगत् व्याप्य स्वर्गे स्थितः । सम्पूर्णं हि विश्वं तस्यैव क्षेत्रं, तदेव ज्ञात्वा अयं क्षेत्रज्ञश्चाभिधीयते । अव्यक्ते मायात्मके शरीरे शयनेन अयमेव पुरुष इति नाम्ना आख्यायते[२] । विश्वे विभिन्नरूपेण व्याप्तत्वात् अयं विश्वरूपः सनातनश्च

---

१—व्यासादयो वनस्थाश्च भिक्षुः पञ्चाशिखस्तथा ।
सर्वे ते योगमास्थाय प्रविष्टाः सूर्यमण्डलम् ॥
शुको व्यासात्मजः श्रीमान् योगधर्ममवाप्य तु ।
आदित्य किरणान् पीत्वा स पुनर्भवास्तवान् ॥ भविष्यपुराणे, १।६६।५०–६०

२ शब्दमात्राः श्रुतिसुखाः ब्रह्मविष्णुशिवादयः ।
प्रत्यक्षोऽयं स्मृतो देवः सूर्यस्तिमिरनाशनः ॥ तत्रैव, १।६६।६१

३ इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् ।
स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ॥
महानिति च योगेषु प्रधानश्चेति कथ्यते ।
सांख्ये च पठ्यते शास्त्रे नामभिर्बहुभिः सदा ॥ भवि० पु० १।६७।६–११

४—( क ) सर्वतः पाणिपादोऽसौ सर्वतोऽक्षिशिरोमुखः ।
सर्वतः श्रुतियुक्तोऽसौ सर्वमावृत्य तिष्ठति ॥ तत्रैव, १।६७।१५

( ख ) अयं श्लोकः योगवसिष्ठे ( ६।२।१४।९ ), ब्रह्मपुराणे ( २३–३५ ),
गीतायाम् ( १३।१३ ), श्वेताश्वतर–उप० ( ३।१६ ),
विष्णुधर्मोत्तरपुराणे ( १।५२।५–६ ), महाभारते चापि बहुवारमायति ।

महापुरुषः कथ्यते। एकैव वायुः यथा शरीरे प्राणापानोदानव्यानादिरूपेण विभक्तः, एकैवाग्निः यथा स्थानविशेषेण आहवनीयस्थापनीयजठराग्निवाडवाग्निरूपेण विभक्तोऽस्ति, एको प्रदीपः यथा सहस्र दीपान् ज्वालयति, तथैव एको सूर्यः विभिन्ननक्षत्ररूपेण ज्योतिः पुञ्जतया विविधेषु जीवेषु जगति व्याप्तः। स एव विश्वेऽस्मिन् बीजरूपेण वर्तते। तस्मादेव त्रिगुणात्मिका प्रकृतिः जायते[१]। अस्मात् परः नास्ति कश्चिद् देवः, स एव जगतः पिता प्रजापतिः आत्मा च। अतएवाहं तमेव आराधये[२]।

सूर्योत्पत्तेः विवरणम् :—सूर्यस्योत्पत्तिविषये भविष्यपुराणे, मार्कण्डेयपुराणे, ब्रह्मपुराणे विष्णुपुराणे च विस्तरेण चर्चा समुपलभ्यते। सर्वत्र स अदितेः पुत्रत्वात् आदित्यः कथ्यते। तस्य पिता कश्यपः कथितः। ब्राह्मपर्वणः १५८ तमे अध्याये इयं कथा दृश्यते यत् पूर्वं समुत्पन्नाः अदितिपुत्राः मृताः अभवन् तत्कालमेव। अदितिः स्वपतिं कश्यपं गत्वा दुःखेन निवेदितवती यत् निरुद्योगिरूपेण भवान् कथमास्थितः। कथमज्ञातोऽयं विषयः यत् सर्वे समुत्पन्नाः मम पुत्राः विनष्टाः। कश्यपः तया सह ब्राह्मणः समीपं गतवान्। ब्रह्मा च तेन सह सूर्यलोकं गतः। तस्मिन् समये सामवेदीयाः जनाः सूर्यलोके वेदानुच्चारयन्ति स्म कोकिलाः भ्रमराश्च तत्र गुञ्जायमाना आसन्। सर्वे वेदवादिनः मीमांसकाः पुराणज्ञाः लोकायतिकाश्च विद्वांसः सूर्यस्य स्तवनं कुर्वन्ति स्म तस्मिन्काले[३]। दक्षः प्रचेताः पुलहः मरीचिः भृगुः अत्रिः वसिष्ठः गौतमः नारदोऽग्निः वायुः अन्तरिक्षः साङ्गाश्च वेदाः ऋतवः मासाः कालः संकल्पः प्रणवः अर्थः धर्मः कामः मोक्षं सर्वे सूर्योपासनां कुर्वन्ति स्म। तत्र गत्वा ब्रह्मा अदितेः कश्यपस्य च दुःखं निवेदितवान्। सूर्यः तयोःक्लेश निवारणाय स्वयमेव पुत्ररूपेणोत्पन्नार्थं स्थापितवान्। एवं विधं वरं लब्ध्वा तौ स्वाश्रममागतवन्तौ। देवमाता अदितिः तं वर्षसहस्रं स्वगर्भे धृतवती। त्रयाणां लोकानां तेजः स्वात्मनि निधाय सूर्यो आत्मरक्षणं कृतवान्। सहस्रं च वर्षं व्यतीत्य स देवान् रक्षितवान्। तस्मिन्नेव काले आनन्दात्मके समये द्वादशादित्याः समुत्पन्नाः[४]। सर्वे च देवास्तत्रागत्य तानाराधयन्।

तस्मात्परः कश्यपः स्वयमेव सूर्यमाराधितवान् पुत्ररूपेण च तमलभत[५]।

---

१—तस्मादव्यक्तमुत्पन्नं त्रिगुणं सर्वकारणम्॥ भवि० पु०, १।६७।२६

२—नास्ति तस्मात्परो ह्यन्यः स पिता स प्रजापतिः।
आत्मा मम स विज्ञेयस्ततस्तं पूजयाम्यहम्॥ तत्रैव, १।६७।२८

३—घोषेण परमर्षीणां सर्वं तत्र निनादितम्। यज्ञसंस्तवविद्भिश्च शिक्षाविद्भिस्तथा द्विजैः॥
अष्टादशपुराणज्ञैः सर्वविद्याविशारदैः। मीमांसाहेतुवादज्ञैः सर्ववादविशारदैः।
लोकायतिकमुख्याश्च तुष्टुवुः सूर्यमीरितम्॥ भवि०पुराणे, १।१५८।१३–३३

४—उत्पन्नं द्वादशात्मानं भास्करं वारितस्करम्॥ तत्रैव, १।१५६।३

५—(क) एवमाराध्य देवेशं ब्रह्मासृष्टिमाप्तवान्।
आराध्य कश्यपश्चापि भास्करं सुतमाप्तवान्॥ भवि० पु०, १।१५६।२५

(ख) सूर्योत्पत्तेः कथा ब्रह्मपुराणे मार्कण्डेयपुराणे चोपलभ्यते। भविष्यपुराणस्य १५८ अध्याये एकचत्वारिंशदध्यायस्य पश्चाद्भूतः महानंशः नष्टः संजातः ब्रह्मपुराणादिकमवलोकनेन आदित्या नियमेन गर्भधारणं पश्चात् स्तुतेः पूजायाः उल्लेखः प्राप्यते। गते सूर्यलोके ब्रह्मासूर्ययोः संवादोऽपि न प्राप्यते। अतः प्रकाशकाः अस्मिन् साम्बपुराणस्य, सूर्यपुराणस्य ब्रह्मपुराणस्य च सहयोगेन पुनः पाठं संशोधयन्तु।

सूर्यस्य कुटुम्ब :–सूर्यकुटुम्ब विषये विवरणं ब्राह्मपर्वणः षट् सतसति अध्याये साम्बपुराणे च षष्ठाध्यायेऽविकलरूपेणोपलभ्यते । अत्र नारदकृतं सूर्यलोके गमनं, सूर्यस्य परिकराणां परिषद्-परिवारिकाणां चावलोकनं वर्णितम् । तत्र सर्वे देवाः गन्धर्वाः अप्सरसः नागाः पक्षाः सूर्यस्य समक्षं नृत्यगीतादिकं कुर्वन्ति[1] । ऋषयः सूर्यं नित्यं स्तुवन्ति, तिस्रश्च संध्याः मूर्तिमत्यः स्थिताः, वज्रं नाराचं च धारयन्त्यः सूर्यस्य स्तवनं कुर्वन्ति । प्रातःकालीना संध्या रक्तवस्त्रं धारयन्ती पूर्वाभिमुखीभूय चन्द्रवर्णात्मिका मध्यसंध्या उत्तराभिमुखी तृतीया च संध्यकालीना संध्या नीलवर्णात्मिका पश्चिमाभिमुखीभूय स्थिताः भवन्ति । इन्द्रोऽपि जयध्वनिं कुर्वन् देवैः सह तत्र तिष्ठति । एवमेव गुरुशुक्रशिवादयस्त्रिष्वपि कालेषु तं पूजयन्ति[2] । प्रातः काले कमलासनोपरि, मध्याह्ने चक्राकारं मण्डलं निर्माय घृतार्चिरूपे, सायंकाले च गणैः सह विपुलाज्यरूपेण स पूजनीयः[3]। गरुडस्य कनिष्ठभ्राता अरुणः स्वललाटे अर्धचन्द्राकारं कमलं धारयन् परश्रद्धाभक्तिसमन्वितो भूत्वा सारथेः कार्यं करोति। तस्य रथः घटिकया पलेन ऋतुना वर्षादिकालस्यान्यावयवेन निर्मितः दिव्य इव संलक्ष्यते[4] । तस्मिन् रथे छन्दोमयाः सप्ताश्वाः संलग्नाः सन्ति । तस्योभौ पार्श्वे निक्षुभा राज्ञी नामधेये द्वे सूर्यस्य पत्न्यौ निवसतः । तेन सह पिङ्गलकनामकः लेखकः अन्यश्च दण्डनायकाभिधः द्वाररक्षकः द्वौ कल्माषपक्षिणौ द्वारि स्थितौ । दिण्डिनामकः सेवकः तस्य समक्षं स्थितो भवति । अन्ये च देवाः तं परिवृत्य स्थिताः भवन्ति ग्रहाश्च मूर्तिमन्तस्तत्र उपासनां कुर्वन्ति[5] ।

सूर्यस्य विराट् स्वरूपम् :––ब्राह्मपर्वणि सप्तसप्तति चाध्याये सूर्यस्य विराड्रूपसम्बन्धिविवरणं साम्बपुराणस्य ६।३–५० श्लोकेषु प्राप्यते । अस्य मूले सूर्यस्य निर्गुणस्वरूपं वर्णितम् । पूर्वं केवलं सत् आसीत् । तस्मादव्यक्ता प्रकृतिरुत्पन्ना, तस्या संकल्पात्मिकासृष्टिरजायत । तस्यैव त्रिगुणात्मकरूपात् ब्राह्माविष्णुशिवादयो ह्युत्पन्नाः बभूवुः[6] । सूर्यं एव प्रातः काले ब्रह्मास्वरूपे सृष्टिमुत्पादयति, मध्याह्ने विष्णुरूपेण पालनं, सायंकाले च शिवरूपेण तस्या अत्ययः करोति । स एव प्रजापालनेन प्रजापतिः, पुरिषु शयनेन पुरुष इति अभिधीयते[7] । नासीत् कश्चिदुत्पन्नः तस्मात्पूर्वम् तस्मात् तस्मात् स्वयम्भूरित्यभिधीयते । जले शेते तस्मान्नारायणाख्यो संजातः । एवं सहस्रशीर्षा सहस्रबाहुश्च तमसः परस्तादादित्यवर्णः पुराणपुरुषः हिरण्यगर्भ इत्यभिधीयते[8] ।

सूर्यस्याराधनविधिः महिमा च :—नित्यनैमित्तिकभेदेन सूर्यस्याराधना द्विधा विभज्यते । भविष्यपुराणस्य ५०, ५१ ५२ तमेषु अध्यायेषु माघशुक्लसप्तम्यां नैमित्तिक-

---

१ —गन्धर्वाप्सराभिश्च नागैर्यक्षैश्च राक्षसैः ।
तत्र गायन्ति गन्धर्वाः नृत्यन्त्यप्सरसस्तथा ।। भवि०, १।७६।१–२

२— ईरयन् जयशब्दं तु इन्द्रस्तत्रैव तिष्ठति ।
कविस्तुं त्र्यम्बको देवस्त्रिसंध्यं पूजयन्ति वै ।। तत्रैव, १।७६।७

३––पूजयेत् स गणं रात्रौ विपुलाज्यस्वरूपिणम् ।। तत्रैव, १।७६।९

४––बहुमानो रथं दिव्यं कालावयवनिर्मितम् ।। भवि० पु०, १।७६।१०

५––ग्रहेश भुवनेशानमादित्यं शरणं व्रज ।। तत्रैव, १।७६।१५

६––सत्वं रजश्च ब्रह्मत्वे च रजस्तम ।। तत्रैव, १।७७।८

७––पुरे शेते च वै यस्मात्तस्मात्पुरुष उच्यते ।। तत्रैव, १।७७।१४

८––हिरण्यगर्भः पुरुषो महात्मा संपद्यते वै तमसः परस्तात् ।। तत्रैव, १।७७।२१

पूजायाः उल्लेखोऽस्ति । साम्बपुराणस्य विंशति एकविंशति चाध्यायेऽपि इदं प्राप्यते । समासेन सूर्यपूजाया अयं विधिः तत्रोपवर्णितः । हस्तपरिमितं वर्गात्मकं स्थण्डिल निर्माणं कृत्वा ( वेदीनिर्माणं विधाय ) गोमयेन लिम्पेत । द्वादशाङ्गुलात्मकं कमलाकारं मण्डलं विधातव्यम्। तस्मिन्नेव मण्डले गणेशः विष्णुः सात्त्विकी सत्यभामा लक्ष्मीः पार्वत्या सह शिवोऽऽराध्यः आह्वानपुरस्सरम् । ततः परं सप्तवारं प्रदक्षिणीकृत्य साष्टाङ्गं प्रणिपत्य प्रणामो विधातव्यः । पुनश्च स्वमनसानुसारं पापानुसारं-—वा शतं सहस्रं दशसहस्रं कक्षात्मकं शुद्धरीत्या संयतेन च मनसा जपः करणीयः[1] । पुनश्चान्ते श्वासनिरोधेन शतरत्तिकाभिर्निर्मिता सुवर्णमुद्रा शतमानाभिधा ब्राह्मणाय दक्षिणायां दातव्या ।-दशसहस्रजयार्थं तु तद्दशगुणाकं लक्षात्मकं जयार्थं तु तत् शतगुणितं दानं दातव्यम् । अनेन सर्वे रोगाः दोषाः पापानि नष्टानि भवन्ति ।

सूर्योपासनायां पुष्पविधानम् :--कुलार्णवतन्त्रे पुष्पशब्दस्य निर्वचनं शोभनं प्राप्यते । तत्रपुष्पपदं मन्यते पुण्यसंवर्धनाय पापापकरणाय श्रेष्ठफलप्रदानाय चान्वर्थकम्[2] । देवोपासनायाः समस्तोपकरणेषु पुष्पं नाम सर्वोत्तमं साधनम्। देवाः सुवर्णैः रत्नैः द्रव्यैः व्रतेन तपसा तथा न भवन्ति प्रसन्नाः यथा चैकेन पुष्पेण[3] । शारदातिलके देवशिरः सर्वदा पुष्पाच्छादितो भवेदिति निर्दिष्टः । तथा च--

"देवस्य मस्तकं कुसुमोपहितं सदा" ॥

शा० ति०-४ । १०५

महाभारतस्यश्वमेधिकपर्वणि ( १०४ ), वृद्धगौतमस्मृतौ ( ८ ), बृहन्नारदीयपुराणस्य पूर्वभागे ( ६७ ), पद्मपुराणस्योत्तरखण्डे ( ६६ ) च पुष्पार्चनविधानं सम्यक् प्रतिपादितमस्ति । तदनुसारं विष्णु पूजायां मासभेदेनापि विभिन्नपुष्पभेदानां निर्देशः कृतोऽस्ति । पद्मपुराणस्य क्रियायोगसारखण्डे त्रयोदशाध्याये कमलपुष्पस्य महाभारतस्याश्वमेधपर्वणि पद्मपुराणस्य क्रियायोगाध्याये दशमे चम्पापुष्पस्य महत्त्वमुपवर्णितम् । एतदतिरिक्तं काशीखण्डादौ अहिंसायाः सत्यस्य च भावपुष्पाणामपि विस्तृतं चर्चा संलक्ष्यते । काशीखण्डस्य चतुर्थाध्यायेऽपि इदं लिखितं वर्तते ।

भविष्यपुराणेऽपि अनेनैव क्रमेण ६८ तमे अध्याये प्रथमतः पञ्चदशसु श्लोकेषु सूर्यस्य प्रियपुष्पाणामुल्लेखः प्राप्यते । सूर्यस्य प्रियपुष्पेषु मल्लिका, कमलम्, कुटजः, मन्दारम्, अर्कम्, पलाशः विशेषेण चर्चितः । अत्रैव कथितं यत् सूर्यपूजायां मल्लिकापुष्पार्पणेन जनः भोगंप्राप्नोति, कमलपुष्पेण सूर्याराधनं कृत्वा सौभाग्यभाजनो भवति[4] । कुटजपुष्पेण अविनाशिनं परममैश्वर्यं प्राप्नोते । मन्दारपुष्पार्पणेन कुष्ठरोगः नश्यति, बिल्वपत्रेणचाराधितेन महालक्ष्मीं प्राप्नोति जनः । अर्कपुष्पनिर्मितेन माल्यार्पणेन सर्वे च कामाः परिपूर्णाः भवन्ति ।

वकुलपुष्पाणां निर्मितेन स्रजा पूजितो भगवान् सूर्यः प्रसन्नो भूत्वा सुमुखीं गुणवतीं रूपवतीं च कलावतीं कन्यां ददाति । पलाशपुष्पेणाराधितो भगवान् सूर्यः न कदापि तं

१—शतं सहस्रमयुतं लक्षं वा निजपापतः दृष्ट्वा शक्ति प्रणम्याथ सदा संयतमानसः ।।भवि० पु० १।५२।५७
२—पुण्यसंवर्धनाच्चापि पापौघपरिहारतः पुष्कलार्थप्रदानाच्च पुष्पमित्यभिधीयते ।। कुलार्णवतन्त्रे-१७।५८
३--( क ) पुष्पैर्देवा प्रसीदन्ति पुष्पे देवाश्च संस्थिताः ।। बृहन्ना० पु० पूर्वभागे, ६७
( ख ) न रत्नैर्न सुवर्णेन न वित्तेन च भूरिणा ।
तथा प्रसादमायाति यथा पुष्पैर्जनार्दनः ।। विष्णुधर्मो० पु०, १।१६७।१-१०
( ग ) लक्ष्मीर्वसति पुष्पेषु लक्ष्मीर्वसति पंकजे ( पुष्करे ) ।
सामे वसतु नो नित्यं सौमनस्यं तथास्तु नः ।। पुण्याहवाचनप्रयोगः ।।
४—मल्लिकायास्तु कुसुमैर्भोगवान् जायते नरः । सौभाग्यं पुण्डरीकैश्च भजत्येव हि शाश्वतम् ।। भवि० प्र०, १।६८।८

पुरुषं पीडयति। अगस्त्यपुष्पेण पूजितः सूर्यः सदानुकूलो भवति। करवीरपुष्पार्पणेन जनः सूर्यस्य पार्षदो भवति, सूर्यलोकञ्च प्राप्नोति स जनः हंसविमानारूढो यः कुन्दपुष्पेण पूजयति सूर्यम्। पुण्डरीकस्य पुष्पशतेन सहस्रेण वार्चितो भगवान् स्वलोकेषु द्वादशात्मकेषु अन्यतमं स्थानं ददाति पूजकम्। रक्तागस्त्येन च पूजितो भगवान् स्वलोकं ददाति अर्चकम्[1] एकोनविंशतिश्लोकतः आरभ्य द्वाविंशतितमेषु श्लोकेषु करवीरस्य महिमानं वर्णयन् सर्वकामप्रदमिदमिति कथितम्। इतोऽधिकं नास्ति किमपि पुष्पं सूर्यस्य तुष्टिकारकमिति। अतः सश्रद्धया जनाः अनेन सूर्यमाराधयन्ति[2]। यो जनः अनेन सूर्यमाराधयति तस्मै कृते किमपि दुर्लभं नास्ति। एतावताऽपि अष्टविंशतिश्लोकादारभ्य त्रिंशद्श्लोकं यावत् सूर्याराधनयोग्येषु पुष्पेषु जातीकुसुमम्, लेपनेषु रक्तचन्दनानुलेपनम्, गन्धेषु केशरम्, धूपेषु विजयाख्यो धूपः, नैवेद्ये च मोदकं श्रेष्ठं कथितम्[3]।

सूर्यस्य प्रतिमाः—भविष्यपुराणस्य ब्राह्मेपर्वणि १३७–३१ तमेऽध्याये सूर्यस्य मन्दिरविषये तत्प्रतिमाविषये च वर्णनमुपलभ्यते तत् साम्बपुराणस्य पञ्चशिति षड्विंशत्यध्याये च प्राप्यते। तत्र नारदः साम्बं सुन्दरे सुरम्ये च स्थाने देवालयान् निर्मातुं चतुःषष्टिपदेषु मध्ये द्वारकपाटं स्थापयितुं तदनन्तरं प्रतिमास्थापनार्थमुपदिशति। मन्दिरेषु समुद्रस्य पद्मस्य नन्दिवर्धनः गृहराजस्य सर्वतोभद्रस्य अष्टास्रस्य वृक्षस्य सिंहस्य हंसस्य षोडशाष्टस्य मन्दिरप्रकारस्य निर्माणार्थं संदिष्टम्। एवंविधानि मन्दिराणां विंशतिप्रकाराणि सन्ति श्रेष्ठानि। एतद्भिन्नाः दशभौमाः सप्तमन्दराः कैलासाः विमानाः नन्दनाश्च मन्दिरभेदाः भवन्ति। एतानि च सर्वाण्येव लक्षणानि साम्बपुराणस्य एकोनत्रिंशदध्याये विश्वकर्मप्रकाशे अंशुमदभेदागमे विश्वकर्मशिल्पे शिल्परत्नादिष्वपि प्राप्यन्ते। सूर्यस्य प्रतिमाऽपि स्वर्णस्य रजतः ताम्रस्य प्रस्तरस्य दारोः मृत्तिकायाः मसिलिखिता सप्तप्रकारिका भवति[4]। नारदः साम्बं दारुनिर्मितां प्रतिमां विशेषेण निर्देशितवान्। तदनुसारं मधूकवृक्षस्य देवदारोः चन्दनस्य विल्वस्य खदिरस्य निम्बस्य श्रीपर्णिवृक्षस्य पनसवृक्षस्य सरलस्य अर्जुनस्य रक्तचन्दस्य प्रतिमाः भवन्ति शोभनाः[5]। एषु क्रमेण द्वौ द्वौ वृक्षौ चतुर्णां वर्णानां कृते निर्दिष्टाः। देवदारोः शम्याः चन्दनस्य मधूकस्य च काष्ठानि ब्राह्मणानां कृते शुभानि प्रोक्तानि, क्षत्रियाणां कृते तु तिंदुनामधेयो तरुः, करकटाख्यः पिप्पलो

---

१—बकपुष्पैर्द्विजश्रेष्ठः भानुसंलोकताम्। तत्रैव, १।६८।१४

२—विलेपनानां सर्वेषां रक्तचान्दनमुत्तमम्। पुष्पाणां करवीराणि प्रशस्तानि प्रचक्षते॥
नातः परतरं किञ्चिद्भास्करं तुष्टिकारकम्। किं तस्य न भवेल्लोके यस्त्वेभिः स्वर्चयेद्रविम्॥
करवीरैः पूजयेद्यो भास्करं श्रद्धयान्वितः। सर्वकामसमृद्धोऽसौ सूर्यलोकमवाप्नुयात्॥ तत्रैव, १।६८।१६–२१

३—गन्धानां कुंकुमं श्रेष्ठं लेपानां रक्तचन्दनम्।
दीपदाने घृतं श्रेष्ठं नैवेद्ये मोदकः परः॥ भवि० पु०, १।६८।२९

४—काञ्चनी राजती ताम्री पार्थिवी शैलजा स्मृता।
दार्वी चालेख्यका चेति मूर्ति स्थानानि सप्त वै॥ तत्रैव, १।१३१।२–३

५—मधूको देवदारुश्च वृक्षराजश्च चन्दनः।
बिल्वश्चाम्रातकश्चैव खदिरोत्थाऽञ्जनस्तथा।
निम्बः श्रीपर्णिवृक्षश्च पनसः सरलोऽर्जुनः।
रक्तचन्दनपर्यन्ता श्रेष्ठाः स्युः प्रतिमा द्रुमाः॥ तत्रैव, १।१३१।१०–११

वा श्रेष्ठः, वैश्यानां कृते रक्तचन्दनस्य बिल्वस्य वृक्षाः श्रेष्ठाः। एवमेव शूद्राणां कृते आम्रस्य, केशरस्य साखू नामकः सर्जकस्य वृक्षाः सन्ति शोभनाः[1]।

प्रतिमानिर्माणपूर्वमेव वृक्षा पूजनीयः। तस्य चन्दनेन अक्षतेन पुष्पेण च पूजा विधातव्या अनन्तरं च बलिः दातव्यः। शुष्को वृक्षः दग्धो वृक्षः पतितो वा पूर्वतः वृक्षः न समानयेत प्रयोगे गायत्र्या सम्यगभिमन्त्र्य प्रोक्षणं च विधाय 'प्रजापतये सतसदायः, इत्यादिभिः वैदिकैः मन्त्रैः हवनं पूजनं धूपं दीपं बालिञ्च दत्त्वा इदं वाच्यं भवान् चलतु देवालये। भवन्तं सर्वे अर्चयिष्यन्ति। इतः परं छेदनं दाहनं च न भविष्यति भवतः। भवन्तः इतः पर देवता-रूपेण प्रतिष्ठिताः सन्ति'। इतः परं वृक्षस्य मूले कुठारं निधाय चन्दनादिना पूर्वाभिमुखो भूत्वा पूजां विधाय अन्यदिने तस्य कर्तनं कुर्यात्। भूमौ वृक्षस्य पतनपूर्वं एवं विधा करणीया व्यवस्था येन वृक्षः पूर्वस्यामेव दिशायां पततु। कर्तनकाले यदि वृक्षात् निःसरेत् तैलं घृतं वा रसं तदा तस्य न भवेत् कर्तनम्। कुठारे च घृतं मधु वा चर्च-यित्वा वृक्षस्य प्रदक्षिणां विधाय कर्तनं कर्तव्यम्। तदनन्तरं तमानीय विधिना व्यवस्थापनीयम्[2]।

सूर्यस्य महत्त्वम् :—भविष्यपुराणस्य ब्राह्मे पर्वणि चतुः पञ्चाशदध्याये सूर्यस्य सर्वाधिकं महत्त्वमुतवर्णितम्। वायुपुराणस्यत्रिपंचाशदध्याये चतुःत्रिंशत्श्लोकादारभ्य एकोनपंचाशतश्लोकेषु साम्बपुराणस्य सम्पूर्णे चाष्टमाध्याये बृहत्संहितायाञ्च विस्तरेण निरूपितं सूर्यमाहात्म्यमिति। उपर्युक्तस्थलेषु सूर्य एव विश्वस्य मूलकारणतया दर्शितः। असावेव प्रतिदिनं जगत् जागरितं करोति, क्रियायां प्राणिनः प्रेरयति, हवनकर्मणि प्रवृत्तं करोति, यज्ञादिकर्माणि ऋषीन् मुनीन् देवान् असुरान् अन्यान्यपि सर्वान् प्रतिपालयति। सूर्य एव सर्वेषामात्मा, सर्वलोकेश्वरः देवानामपि परमो देवः अस्ति[3]। अग्नौ विधिहुतं हव्यं सूर्य एव प्राप्नोति। तदनन्तरं सूर्यः वृष्टिं करोति, वृष्ट्या पृथिव्यां भवति अन्नम्, तेनैव जलेन प्रजा जीवनं धारयति[4]।

सूर्येणैव निर्मीयते क्षणम्, रात्रिः, दिनम्, मुहूर्त्तम्, पक्षः, मासः, ऋतुः, वर्षा ग्रीष्मम्, संवत्सरम्, युगम् कल्पादि-कञ्च[5]। पुष्पफलकन्दमूलादीनां सम्भवः ओषधानां धान्या-नाञ्च निष्पत्तिः समस्तानाञ्च प्राणिनां लोकव्यवहारः सूर्यं विना न सम्भाव्यते[6]। सूर्यः जलेन पूर्णतया सम्पृक्तः एतेन तस्या शोभाभिवर्धनञ्च भवति। वसन्ततौ सूर्यः कपिलवर्णः, ग्रीष्मे च कंचनवर्णः, वर्षायां श्वेतवर्णः, शरदत्तौ पाण्डुवर्णः भवति। हेमन्ते ताम्रवर्णात्मको सूर्यः, शिशिरे च लोहित-वर्णात्मको भवति। कृष्णवर्णात्मको सूर्यः जगतां हानि-कारकः। चित्रवर्णात्मको सूर्यः धूम्रवर्णात्मको वापि जगतां कृते उद्वेगजनको भवति। सूर्यः यदा जलवर्षणे विलम्बं करोति तदा चौराणां वृद्धिः भवति[7]। एवं प्रकारेण ज्ञायते यत् सूर्य एव विश्वस्य प्रतिपालकः रक्षकश्च अस्ति।

१—केसरः सर्जकश्चाम्रः शालवृक्षस्तथेतरः। एते वै तरवः पुण्याः शूद्रकाः शुभदायकाः॥ भवि० प्र०, १।१३१।१२–१६

२—मध्वा वाज्यदिग्धेन कुठारकेण प्रदक्षिणं शेषमभि प्रहण्यात्॥ तत्रैव, १।१३१।४१

३—सर्वात्मा सर्वलोकेशो देवदेवः प्रजापतिः। सूर्य एव त्रिलोकस्य मूलं परं दैवतम्॥ भवि० पु०, १।५४।४

४—अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥ तत्रैव, १।५४।५

५—क्षणाः मुहूर्त्ता दिवसा निशाः पक्षाश्च नित्यशः। मासाः संवत्सराश्चैव ऋतवोऽथ युगानि च॥ तत्रैव, १।५४।८

६—अभावो व्यवहाराणां जंतूनां दिवि चेह च॥ तत्रैव, १।५४।११

७—तस्करशस्त्रनिपातैर्यदि न सलिलमाशु पातयति॥— तत्रैव, १।५४।१६

# संक्षिप्तम् महाभारतम्

सौतिरुवाच—ऋषिर्महान्पूर्वं तपोविद्यासमन्वितः ।
स्थूलकेश इति ख्यातः सर्वभूतहितेरतः ॥

स्थूलकेशः सतेजस्वी विजने वन्धुवर्जिताम् ।
दृष्ट्वा कांचिच्छुभां कन्यां जग्राह च पुपोषच ॥

प्रमदाभ्योवरा सा तु सत्त्वरूप गुणान्विता ।
ततः प्रमद्वरेत्यस्याः नाम चक्रे महानृषिः ॥

ततः प्रादात् पिता कन्यां रुरवे तां प्रमद्वराम् ।
ततः कतिपयाहस्य विवाहे समुपस्थिते ॥

सखीभिः क्रीडति सार्द्धं सा कन्या वरवर्णिनी ।
पदा सर्पं समाक्रामन्मुमूर्षुः कालनोदिता ॥

सा नष्टा तेन सर्पेण पपात सहसा भुवि ।
व्यसुरप्रेक्षणीया सा प्रेक्षणीयतमाऽभवत् ॥

ततः सर्वे द्विजवराः समाजग्मुः कृपान्विताः ।
प्रमतिः सहपुत्रेण तथाऽन्ये वनवासिनः ॥

रुरुदुः कृपयाविष्टा रुरुस्त्वार्तो बहिर्ययौ ।
शोकेनाभिहतः सोऽथ विलपन् करुणं बहु ॥

अब्रवीद्वचनं शोचन् प्रियांस्मृत्वा प्रमद्वराम् ।
यदि दत्तं तपस्तप्तं गुरवो वा मया यदि ।
सम्यगाराधितास्तेन संजीव तु मम प्रिया ॥

एवं लालप्यतस्तस्य भार्य्यार्थे दुःखितस्य च ।
देवदूतस्तदाभ्येत्य वाक्यमाह रुरुं वने ॥

देवदूत उवाच—यतो मर्त्यस्य धर्मात्मन्नायुरस्ति गतायुषः ।
तस्माच्छोके मनस्तात माकृथास्त्वं कथञ्चन ॥

उपायश्चात्र विहितः पूर्वं देवैर्महात्मभिः ।
तं यदीच्छसि कर्तुं त्वं प्राप्स्यसीह प्रमद्वराम् ॥

रुरुवाच—क उपायः कृतो देवै ब्रूहि तत्वेन खेचर ।
करिष्येऽहं तथा श्रुत्वा त्रातुमर्हति मां भवान् ॥

देवदूत उवाच—आयुषोऽर्द्धं प्रयच्छ त्वं कन्यायै भृगुनन्दन ।
एवमुत्थास्यति रुरो तव भार्य्या प्रमद्वरा ॥

रुरुरुवाच—आयुषोऽर्द्धं प्रयच्छामि कन्यायै खेचरोत्तमः !
शृङ्गाररूपाभरणा समुत्तिष्ठतु मे प्रिया ॥

सौतिरुवाच- एवमुक्ते ततः कन्या सोदतिष्ठत्प्रमद्वरा ।
रुरोस्तस्याऽऽयुषोऽर्द्धेन सुप्तेव वरवर्णिनी ॥

एतद् दृष्टं भविष्ये हि रुरोरुत्तमतेजसः ।
आयुषोऽतिप्रवृद्धस्य भार्य्यार्थेऽर्द्धमलुप्यत ॥

तत इष्टे तुष्टौतयोः पितरौ चक्रतुर्मुदा ।
विवाहं तौ च रेमाते परस्परहितैषिणौ ॥

* इति श्री संक्षिप्तमहाभारते आदिपर्वणि रुरुप्रमद्वरोपाख्यानात्मकश्चतुर्थोऽध्यायः *

[ क्रमशः

# वासन्ती रमणीयता

श्रीमन्तः पाण्डेय महाभागाः, लक्ष्मणपुरक्षेत्र संस्कृत पा० निरीक्षकाः

दिशि दिशि भुवि तन्वन् श्यामतां सस्यरूपां तदुपरिनवरम्यं सार्षपं पुष्पजालम् ।
रमयति सुजनानां मानसं पीतवासा अवतरित इहेत्थं मूर्तिमान् माधवोऽयम् ॥ १ ॥

दर्शं दर्शं नयनसुखदं सौभगं दिव्यरूपं पीतं पीतं विपुलविमलं सार्षपं क्षेत्ररम्यम् ।
शीतं नीतं प्रसभममुना, सर्वथा सर्वरम्या, चित्ते दत्ता परम मुदिता माधवेनात्मयोगात् ॥२॥

अभिनवकुसुमानां गन्धवन्तो दिगन्ताः किसलयिततरूणां वल्लरीणां च कान्तिः ।
मधुकरनिकराणां गुञ्जनं मञ्जरीषु रतिपति—सुहृदस्ते स्वागतं व्याहरन्ति ॥ ३ ॥

सुरभयति दिगन्तः सर्वतः पुष्पजालं विरमयति विलोलं लोलयल्लोचनानि ।
विगलयति समस्तां मानिनीमानलीलां विरचयति विनोदं भोगिलोके वसन्तः ॥ ४ ॥

नेयं प्रभा पुष्पित सर्षपाणां सा काञ्चनी कान्तिरतीव रम्या ।
या कर्षकाणां महताश्रमेण धरां विनिर्भिद्य बहिश्चकास्ति॥ ५ ॥

वसुन्धरा यानि वसूनि धत्ते न तानि मान्ति स्वयमन्तराले ।
ऋतौ वसन्ते सुमनांसि भूत्वा समन्ततो भान्ति वनस्पतीनाम् ॥ ६ ॥

दिनकरकरजालं तापतप्तं करालं पुनरपि लभमानं भाति खे शोभमानम् ।
लघुलघु–दिवसानामेधमानं च मानं सुखयति नरलोकं कोकशोकं विहन्ति ॥ ७ ॥

सस्यश्यामलता प्रसूनबहुता सौरम्यसारस्वता, कुञ्जानामतिचारुता सुभगता सर्वत्र शोभान्विता ।
क्षेत्रेषु प्रकृतेः स्वरूपसरिता सीमन्तिनी मञ्जुता धन्यानां मनसि प्रसादभरतामापादयन्त्यञ्जसा ॥८॥

रसाल–वृक्षोद्गतमञ्जरीणामामोदमादाय किरन् दिगन्ते ।
समीरणो मोदयति प्रकामं गुञ्जन् द्विरेफश्च पिको विकूजन् ॥ ९ ॥

हे हे रसाल ! मधुकालसमागमेऽस्मिन् , येऽमी भ्रमन्ति मधुपा मधुपानलुब्धाः ।
जानीहि तान् कपटमित्रजनान् यतस्ते, याते समृद्धिसमये न समीपमास्ते ॥ १० ॥

# कर्ममीमांसादर्शनम्

भगवत्पूज्यपादाः महर्षयः ज्ञानानन्द गुरुवर्याः

क्रमशः ....... गताङ्कात् ....... अग्रे ]

शङ्कां समाधत्ते —

## स्वाभाविकेन तथातदभावात् ॥ ४६ ॥

स्वाभाविके संस्कारे न तथा भवति, तदभावात् तस्य संगस्य आसक्तेर्वा अभावात् अस्तिताविरहात् । शंकते— ननु अस्वाभाविकः संस्कार एव समाकृष्यते स्वाभाविकः कुतो नेति ? सत्यम् । भवदीयशंकासमाहितय एव पूज्यपादेन सूत्रकृता महर्षिणा सूत्रमिदमाविष्कृतं । श्रूयताम् अस्वाभाविकाः संस्काराः कर्त्तुरहंकारजनितवासनाकेन्द्रासक्ता । अत एव तदवासनाकेन्द्रे समाकृष्यन्ते, परन्तु स्वाभाविकसंस्कारैः सह तदभावान्न ते समाकृष्यन्ते, मनुष्येतरोदभिज्जादिजीवानां, किं वा जीवन्मुक्तादीनां महात्मनां च संस्कारेषु अहंकारजवासनाया लेशमात्रतोऽपि सम्बन्धाभावात् स्वाभाविकाः संस्कारा अस्वाभाविकसंस्कारवत् न कदापि समाकृष्टा भवन्ति । यद्यपि ते प्रकारान्तरेण प्रतिक्रियामुत्पादयन्ति, परमस्वाभाविकसंस्कारवत् नैव निजकेन्द्रे समाकृष्टा भवन्ति न वा फलोत्पत्तिं जनयन्ति ॥ ४६ ॥

विज्ञानमेतत् स्पष्टयति—

## तत्र न भेदः कर्मणाम् ॥४७ ॥

तत्र स्वाभाविके संस्कारे सञ्चितक्रियमाणप्रारब्धकर्मणां भेदो नास्ति । भेदोऽयमस्वाभाविकसंस्काराणामेव, एतन्मौलिकसिद्धान्तोऽयं यत् स्वाभाविकाः संस्काराः प्रकृतिस्वभावोदभवाः । कथमिव ते प्रकृतिस्वभावतः समुद्भवन्तीति पूर्वमेव प्रपञ्चितम् ॥ ४७ ॥

आकाशसम्बन्धेन विज्ञानं स्पष्टीकुरुते—

## आकाशस्यापि भूतसंघे प्रकृत्यायत्तत्वात ॥४८॥

प्रकृत्यायत्तत्वात् प्रकृतेरधीनत्वात् भूतसंघे चतुर्विधभूतसङ्घे आकाशस्यापि न भेदः अस्वाभाविकसंस्कारस्त्रिविधैर्भेदैः सार्कं त्रयाणामप्याकाशानां कीदृशः सम्बन्ध इति पूर्वमेव निर्णीतम् । शङ्कते स्वाभाविकसंस्काराणां तैः सह कीदृशः सम्बन्धः ? त्रिविधाकाशैन तेषां कथं न तादृशः सम्बन्धः ? समाधत्ते—चतुर्विधो भूतसङ्घः पूर्णरूपेण प्रकृतेरधीनः । तत्राहंकारजनितजीववासनाया लवलेशोऽपि नास्ति, तेन प्रकृतिमातुरिङ्गितेनैव सर्वमनुष्ठीयते, अतस्तदीयकर्मजनितसंस्कारैः सहाभेदसम्बन्धः । वस्तुतः स्वाभाविकः संस्कार एकोऽद्वितीयश्चातस्तदर्थम आकाशत्रयभेदाभावः । चतुर्विधभूतसंघे विद्यमानाः स्वाभाविकसंस्काराश्चित्ताकाशे, चिदाकाशे महाकाशे च समानरूपेण व्यापकास्तिष्ठन्ति । किं वा तत्कृते आकाशत्रयभेदकल्पना नास्तीत्यप्यभिधातुं शक्यते ॥ ४८ ॥

मुक्तिप्रसंगात् कर्मणो लयविज्ञानमुच्यते—

## संस्कारात्तस्याविर्भावो भोगात्तु लयः ।४९॥

संस्कारात् तस्य कर्मण आविर्भावः समुत्पत्तिः, भोगात् तु तस्य कर्मणो लयो जायते, कर्मबीजं संस्कारः । बीजादवृक्षोत्पत्तिरिव, संस्कारात् कर्माविर्भावः फलोत्पत्तेरनन्तरं वृक्षस्येव शुभाशुभभोगप्रादुर्भावानन्तरं कर्मणो विलयः, प्रतिक्रियामुत्पाद्य क्रियाया लयो जायते । वस्तुतः क्रियाप्रतिक्रियाविधानकाले या शक्तिः प्राकट्यं प्राप्नोति, सा प्रतिक्रिया-

माविर्भाव्य प्रणश्यति। उदाहरणेनावगन्तव्यं यत् यया शक्त्या हस्त उत्थाप्यते, तत्प्रतिक्रियाकाले करो निम्नभागे निपतति। तदानीं प्रतिक्रियामुत्पाद्य सा शक्तिर्विलीयते। एवमेव संस्कारतः कर्मणि समुत्पन्ने संस्कारशक्तिः तत्र कार्यं विधत्ते, शुभमशुभं वा भोगमुत्पाद्य सा शक्तिर्विलीयते ॥४६॥

भोगस्वरूपमभिधत्ते—

**भोगनिष्पत्तिर्व्यष्टिसमष्टिभ्याम् ॥५०॥**

कर्मफलेन शुभाशुभभोगनिष्पत्तिः समष्टिव्यष्टिसम्बन्धाद् द्विधा विभज्यते। समष्टिसम्बन्धेन समुत्पद्यमानभोगशक्तेः प्रेरणा चित्ताकाशतः, समष्टिसम्बन्धः पिण्डात्मकः समष्टिसम्बन्धश्च ब्रह्माण्डात्मको वेदितव्यः। उदाहरणरूपेणावगन्तव्यं यत् साधारणव्याधिग्रस्ते जीवे व्यष्टिसम्बन्धः, व्यष्टिसम्बन्धः, महामारीप्रभृतिभिर्व्याधिभिर्ग्रस्यमाने समष्टिसम्बन्धो बोद्धव्यः व्यष्टिसम्बन्धेन केवलं जीवपिण्ड एव त्रिदोषदूषितोजायते, ब्रह्माण्डप्रकृतिर्न दुष्यति। समष्टिसम्बन्धेन पूर्वं ब्रह्माण्डप्रकृतिरेव त्रिदोषदुष्टा भवति, तदनन्तरं पिण्डो दुष्यति ॥ ५० ॥

प्रसंगात् शंका समाधीयते—

**कामः काम्यभोगेनानलवदाहुत्या ॥ ५१ ॥**

काम्यस्य सुखस्य भोगेन काम आहुत्याऽनल इव प्रवर्धत इतिशेषः। जिज्ञासुरत्र शङ्कते--ननु भोगनिष्पत्तौ जातायां किं भवति वासनाक्षयः? किं कृतस्य कर्मणो भोगेन भवितुमर्हति मोक्षः? समाधत्ते--भवदीयशङ्कासमाहितय एव सूत्रस्यास्याविर्भावः। श्रूयताम्—यावत् तत्त्वज्ञानेन न जायते वासनानाशः, तावत् सकामभोगेन कदापि कर्मविमुक्तिर्न भवति। यतो ह्येकस्य भोगस्य काले, अनन्तभोगवासनाः समुत्पद्यन्ते। आहुत्या यथाऽग्निर्न शाम्यति, प्रत्युत जाज्वल्यते एव, तथैव कामनापूर्वकं भोगनिष्पत्तौ जातायां कदापि कर्मजालतोजीवो ह्यात्मानं विमोक्तुं नार्हति। यद्यपि येन संस्कारबीजेन फलस्वरूपभोगस्योत्पत्तिरभूत्, संस्कारोऽसौ विलीयते, नात्र संदेहः परन्तु स हि कामनाया अन्तःकरणे सत्त्वात् नवीना अगणितसंस्कारान् आविर्भावयति। बीजेन वृक्षस्य वृक्षेण बीजस्य समुत्पत्तिरिव कर्मजालशृङ्खला प्रचलन्ती तिष्ठति। स्मर्यते चात्र--

> न जातु कामः कामानामुपभोगेन शाम्यति।
> हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥इति॥५१॥

उपादेयमभिदधाति—

**तदुपनिषन्मतं वैराग्यम् ॥ ५२ ॥**

तस्मात् कारणात् वैराग्यमेव उपनिषत्सम्मतम्। उपनिषदः समारभ्य, वेदे तत्सम्मतशास्त्रेषु च वैराग्यमहत्त्वं समुद्घोषितम्। यथा च स्मृतौ--

> इह दृश्यानि सर्वाणि नश्वराणि भवन्त्यहो।
> अविवेकमयोऽयं यत्संसारोऽतोभयाप्लुतः॥
> अविवेकसमुद्भूत-विषयासक्तितः क्वचित्।
> लब्धुं न कोऽपि शक्नोति निर्भयत्वमितः स्वतः॥
> पुत्रमित्रकलत्रादिस्वजनः स्वस्वकर्मणा।
> भोगार्थं युगपन्नूनमेकत्रोत्पत्तिमाश्रिताः॥
> आत्मीयत्वेन राजन्ते ध्रुवं स्वस्वार्थसिद्धये।
> संस्थाप्यामृतसम्बन्धमेषु यान्ति महद्भयम्॥
> एतदात्मीयजं दुःखं भयं चाज्ञानमूलकम्।
> न जायते सुखं सत्यं नश्वरात्कञ्चनादितः॥
> ईदृशे नश्वरेऽर्थे हि सक्तो देही निरन्तरम्।
> विविधं दुःखमाप्नोति भयं चैवाधिगच्छति॥
> जरामृत्युभयं देहे पुत्रादौ कालजादिकम्।
> राजतस्करजं द्रव्ये जराजं यौवने भयम्॥
> जरारोगभयं रूपे बले शत्रुभवं भयम्।
> भोगे रोगभयं नूनं कुले पतनजं भयम्॥
> दीनताजं भयं माने गुणे खलभयं खलु।
> भयं निन्दकजं शक्तौ विद्यायां वादिजं भयम्॥
> स्वर्गेऽपि प्रार्थ्यमानेऽस्मिन्नीर्ष्यापतनजं भयम्।
> वैराग्यपदमेवाऽत्र तिष्ठत्यभयमुत्तमम्॥ इति ॥५२॥

[ क्रमशः

# अवमूल्यनम्

डा० शिवदत्त शर्मा चतुर्वेदः
प्रवक्ता का० हि० वि० वि० वाराणस्याम्

देशस्यादर्शाणामवमूल्यनमत्र यज्जातम् राष्ट्रस्वरूपलोपस्तेन क्रमशो विलोक्यते नित्यम् ॥१॥
शौर्यस्वरूपनाशो गौरवभावस्तथा नष्टः विद्याविलासकान्तिर्गता तथा भारतीयानाम् ॥२॥
जीवनमप्यवशिष्टं भृतिकार्ये वेतनाऽवाप्तौ सामूहिकः स्वभावो जनतायाः सत्वरं नष्टः ॥३॥
यान्त्रिक विज्ञानेषु प्रबलतमैस्तैर्विदेशीयैः जाङ्गलिकं चिद्रूपं साधितमस्मत्सुपुरुषाणाम् ॥४॥
ऐक्यास्वादविहीना एकैकस्मिस्तु संकुचिताः एतद्देशे मनुजा मानवरूपादपि भ्रष्टाः ॥५॥
अवमूल्यनमीदृशमथ मानवधर्मस्य संजातम् विश्व गुरुत्वे संस्थितमेतद् राष्ट्रं विपन्नमभूत् ॥६॥
स्वीये राष्ट्रे सर्वे प्रथमश्रेणीपरिगणनयोग्याः मध्यमनिम्नश्रेण्यां सर्वे ते स्थापिता आंग्लैः ॥७॥
वर्गाणां देशेऽस्मिन् रूपं तैस्तादृशं गठितम् स्वातन्त्र्येऽपितदेतत्सौख्यकरं शासकानां वा ॥८॥
सत्यात् नीतिर्दूरा कर्त्तव्यं दूरतरभूतम् स्वार्थमयः सन्तोषः केवलमेकः समाभाति ॥९॥

# दूरे-अन्तिके

अन्तिकतमस्थितिर्या सा बाधा रम्यतायां स्यात् ।
दूरतमा संस्थितिरपि रम्यत्वं नो विलासयति ॥१॥
परमं यद् रमणीयं समीपतमसंस्थितं भाति ।
तद् रमणीयमितीयं दृष्टिर्दूरान् निबध्नाति ॥२॥
सामीप्यातिशयादपि तस्य न रमणीयताऽनुभवः ।
तद् हृदये संजातोऽन्येषां हृदये यथा भवति ॥३॥
स्वीया यद्यपि सुन्दरभावे लभते परां काष्ठाम् ।
परकीयैव मनोज्ञा सततं चेतो निबध्नाति ॥४॥
दूरे चाथ समीपे यस्या स्थितिरीदृशी भूयात् ।
नितरां मनोज्ञरूपा चित्ते नूनं समादरं लभते ॥५॥
सौन्दर्यानुभवोऽयं दूरान्तिक — संगमेनैव ।
छायामसमां स्वीयां विस्तारयति प्रकामरमणीयाम् ॥६॥
जगदीश्वरसंस्थितिरपि मायाऽवरणेन दूरिता वाऽसौ ।
सर्वाऽन्तिकतायामपि चरमानन्दस्वरूपाऽऽस्ते ॥७॥

# ❋ राजतां भारतम् ❋

[ श्री रमाकान्त शुक्लः, दिल्ली ]

कर्दमाक्रान्तवीथियु सौधेषु वा यत्र पादातमार्गेषु गेहेषु वा ।
जीवनं लोकसेवापरं लक्ष्यते भूतले भाति तन्मामकं भारतम् ॥१४॥

जीवदास्ते न जानामि कस्माद्युगात् साम्प्रतं निर्धनत्वेऽपि संर्ज वति ।
मृत्युहीनं जराहीनमाशान्वितं भूतले भाति मेऽनारत भारतम् ॥१५॥

साधकैः सद्भिरध्यात्मचिन्तापरैर्देशभक्तैर्विपश्चिद्भिरापूरितम् ।
कर्षकैः कार्मिकैः स्विन्नगात्रैर्युतं भूतले भाति मेऽनारतं भारतम् ॥१६॥

रक्तपातं विना शस्त्रपातं विना यत्र संक्रन्तिरायाति मन्दस्मिता ।
येन विश्वं सदा शिक्ष्यते प्रेयते भूतले भाति तन्मामकं भारतम् ॥१७॥

यत्र हिंस्रः स्वपापैः स्वयं हिंस्यते, यत्र साधुः समत्वाद्भयान्मुच्यते ।
यत्र सत्यं जयं याति नैवानृतं, भूतले भाति तन्मामकं भारतम् ॥१८॥

यत्र सर्वंसहा मेदिनी राजते, यत्र शीलं परं भूषणं भण्यते ।
यत्र मौनं चकास्ति व्रतेषूत्तमं भूतले भाति तन्मामकं भारतम् ॥१९॥

सज्जनान् दुर्गतान् दुर्जनान् सद्गतान् मानिता वारनार्यो विपन्ना वधूः ।
वीक्ष्य वित्तं कवेर्विव्यथे यत्र तद् भूतले भाति मेऽनारत भारतम् ॥२०॥

दुःखदावानलैर्दग्धदेहान् नरान् क्षुत्पिपासाकुलान् वृत्तिकष्टार्दितान् ।
वीक्ष्य कारुण्यपूर्णा नरा यत्र तद् भूतले भाति मेऽनारतं भारतम् ॥२१॥

चचलां राजलक्ष्मीमुलूकस्थितां सर्वशुक्लां च वाणी मरालस्थिताम् ।
यत्र लोको यथेष्टं मुदा वन्दते भूतले भाति तन्मामकं भारतम् ॥२२॥

यत्र नग्ना क्षुधार्ता अगेहा अपि स्वाभिमानं जहत्येव नो मानवाः ।
यत्र दृप्तं निरोहस्तृणं मन्यते भूतले भाति तन्मामकं भारतम् ॥२३॥

शासनासन्दिकाराधनैकव्रतं नेतृवृन्दं समालोक्य छद्मावृतम् ।
यत्र नित्यं हसन्ति प्रजानां गणाः भूतले भाति तन्मामकं भारतम् ॥२४॥

निबलं निर्धनं कैश्चिदुक्तं सदप्यस्ति यत्स्वाभिमानेन पूर्णं सदा ।
शारदाश्रीसपर्यापरं पावनं भूतले भाति मेऽनारत भारतम् ॥२५॥

सन्तु दोषा अनेकेऽत्र कैश्चिन्मताः किन्तु नाहं प्रपश्यामि तान् मन्दधीः ।
वन्दनीयं मया, कीर्तनीयं मया मोदतां वर्धतां राजतां भारतम् ॥२६॥

---

सम्पादकः प्रकाशकः मुद्रकश्च–डॉ० परमहंस मिश्रः,
श्रीभारतधर्म महामण्डलम् लहुराबीर, वाराणसी–२२१००१
मान मुद्रण यन्त्र, पियरी कलाँ, वाराणसी